হৰষে চলত হৰি লোক ভুলাই।
দশবিধ লোক দশ হি ৰূপ চাই ॥
পেখিয়ে চাণুৰ সভা মহ যায়।
শুনতো ৰাজ আজ্ঞা ৰাম কান্নাই।
হামু সঙ্গে যুদ্ধ কৰত কুচি।
নৰপতি কংস হোৱে তব খুচি ॥
কহত গোপাল তুমহি বড়িলাল।
পেখ লাড়িকা হামু গোপ ছাৱাল ॥
সমান বয়সে যুদ্ধ কৰত যুলি।
শুনিয়ে চাণুৰ মাতে বাহু তুলি ॥
তুমহি কিয়ে কুৱলয় অন্তা ॥
কুচ ছাৱাল বড়হি বলীয়ন্তা ॥
এহেন্তে ৰাম বড়হি বলীয়াৰ।
মুষ্টিক সমে কৰু মল্ল বিহাৰ ॥
মল্ল শিৰোমণি ৰাম কান্নাই।
দ্বন্দ্ব যুদ্ধ মল্ল বিচে বনাই ॥
নানা বন্ধ ধৰলহি বাহুমালে।
সব উতাৰিয়ে তাসু কিয়ে কলে ॥
পেখিয়ে কুট আৱলি তাকু ধাই।
মাৰলি ৰাম বামমুষ্টি উঠাই ॥
সল্ল তোসল্ল দুহু যোপে ধাই।
মাৰলি গোপালসে লাথ ভেজাই ॥
জয় জয় কৃষ্ণ ঘোষত সবলোক।
পাৱত ৰাজা বহুত ভয় শোক ॥
পিতৃ মাতৃ কহু আৱৰি নন্দ।
পেখি হৰিক জয় মিলত আনন্দ ॥
ৰাজা কংসে ৰোষে বোলে বাণী।
দুৰ কৰ মল্ল বাদ্য নিশানি ॥
এহেসে বাহিৰ কৰ ৰাম কান্নাই।
মাৰলি মাল এহে দুহো ভাই ॥
নন্দ কহু বান্ধ কাট বসুদেউ।
মাৰ উগ্ৰসেন ৰাখবি নাহি কেউ ॥

নিশবদ বাণী শুনিয়ে নৰ-নাৰী।
তাসু পেখি ভকত ভয়হাৰী ॥
লাম্ফে মঞ্চে সঞ্চাৰিয়ে হৃষীকেশ।
পাৰলি কংস পাকড়িয়ে কেশ ॥
যোহি উপৰে বহু ৰোষ অপাৰা।
তাসু পৃষ্ঠে বৈথে ত্ৰিজগত ভাৰা ॥
মৰলহি কংস সমাজহি চুপ।
দেলহ যো আপনহি নিজৰূপ ॥
ৰোষ উঠাৱল কংসকহি ভাই।
মাৰল বলে তাহে পৰিঘ উঠাই ॥
ৰাজ মহিষী কান্দে মনহি সন্তাপে।
তাসু শান্ত কিয়ে ত্ৰিজগত বাপে ॥
মিলাৱত মুকুতি কংস কহি সুখী।
ভকতি মাগো হামু বড়ি দুখী ॥
কৰু দায়াল কৰুণা একবাৰা।
তেবে দাস কিয়ে নিয়ো নিস্তাৰা ॥
মুখে জুনো ছাড়ে তুৱা গুণ নাম।
কহ শঙ্কৰ সব বোলা ৰাম ৰাম ॥

---

## ৰাজ ভটিমা (১)

জয় জয় মল্ল নৃপতি ৰসৰান।
যাকেৰি গুণগণ সম নাহি আন ॥
নিজ কুল কুমুদ প্ৰকাশিত ইন্দু।
গহীন গম্ভীৰ ধীৰ পেখিতে সিন্ধু ॥
সভা এক পাত্ৰ আপন মহাৰাজ।
দেৱক মধ্যে বৈসে সুৰৰাজ ॥

আপন ভুজবলে দণ্ডিয়ে ৰাজকুল
পাৱত সকল হি কাষ।
জয় জয় ঈশ্বৰ পাদ প্ৰণাম
মল্লদেৱ কৰু ৰাজ ॥

নটক ভাটক পশ্চিম দেশক
যত যত্ত পণ্ডিত আৱে।
ঘোটক কম্বল বহুত ৰজত
আপনহি মন পূৰি পাৱে ॥
অস্ত্ৰত শস্ত্ৰত শাস্ত্ৰত পাৰ্গত
বিপক্ষক আপন জান।
দেৱ ব্ৰাহ্মণক পিতৃক অৰ্চ্চনে
যাকেৰি নাহি সমান ॥
আপন নৃপবৰ ধৰ্ম্ম যুধিষ্ঠিৰ
বিচাৰত আপন সুজান।
কাব্য কবিত্ব শশধৰ পণ্ডিত
ধনুৰ্দ্ধৰ অৰ্জ্জুন সমান ॥
মানে দুৰ্য্যোধন আপন পুণ্যজন
দানে কৰ্ণ সমান।
মল্লত যুদ্ধত আপন দৃষ্টিত
তুহুঁ বিনে নাহি আন ॥
আপন গুণযশে ব্যাপিয়ে ধৰণী
নৃপতি মধ্যত পেখি।
নীল উতপল পেখিয়ে শৰীৰক
মৃণাল সদৃশ ভুজ দেখি ॥
বাহু বক্ষঃস্থল কটি মধ্য দেখিযে
কামিনী হোৱে বেড়ি লাজ।
যৈসে ৰাজ হংসীক গমনী
প্ৰবীন গম্ভীৰ মৃগৰাজ ॥
কহলো তুয়ু গুণ হামু শিশুমতি
ক্ষেমব সকল মহ দোষ।
কহয়ে শঙ্কৰ নজানো সভাসদ
পাত্ৰ মধ্যে ই কথা পোছ ॥

---

## ৰাজ ভট্টিমা (২)

হাসি সভাষিত কৰো বহু থিৰ।
মল্ল নৃপতি সম নাহিকয় বীৰ ॥
কাশী বাৰাণসী গৌড় পৰ্য্যন্তে।
মল্ল নৃপতিক সব মহিমা কহন্তে ॥
পায়া ঘোটক দেশ অশেষ।
ভাটসকলে গুণ গাৱে বিশেষ ॥
আপন মন বাঞ্ছিত সকলহি পাই।
আনন্দে মল্ল বিলাস গাই ॥
ঐসন নৃপতি কহবো নাহি পেখি।
উদয় গিৰিত যৈসে সূৰ্য্যক দেখি ॥
সভা ৰঞ্জত যৈসে দেৱতা সমাজ।
স্বৰ্গক মধ্যে যৈসে দেৱৰাজ ॥
এসব গুণ কহে পশ্চিম মাজে।
তাহেক শুনল পাৎশা সমাজে ॥
উমৰাসবক আনিয়ে বাত বোল।
এতি বেৰি গাডাৰা ঘাট মাৰিয়ে তোল ॥
পাঠানসকলে যদি বিলাসিত হোই।
ওৱা হোৱা পাৎশা পেখি নাহি কোই ॥
যৈসে ৰাহু গৰাসিত সুৰ।
আৰত পাঠান তেজি নিজপুৰ ॥
পাঠানসকলে কহে গাডাৰা ঘাট মাৰি যাঞঁ।
হাৰাম বামহাতে কটিয়া খাঞঁ ॥
যুদ্ধ লগাৱল আতি বড় টানে।
খেদল ছেদল পলাৱল প্ৰাণে ॥
পুনৰপি উমৰাসকল সব আৱে।
গলায়ে পাটুকা বান্ধি শৰণ সোমাৱে ॥
মুকুথ শঙ্কৰ নজানে সকল।
জয় মল্ল নৃপতিক চৰণ যুগল ॥

—:০:—

( সমাপ্ত )

श्रीकृष्णाय नमः

श्रीशङ्करवाक्यामृतम्

# भक्तिरत्नाकरः

——:०:——

## प्रथममाहात्म्यम्

यन्नामधेयेन भवाब्धिमध्वा तर्य्या समुत्तीर्य्य नरः परं पदम् ।
प्राप्नोति पातक्यपि तं सनातनं सदासदानन्दमुपास्महे हृदि ॥१
यत्कृपालेशलाभेन लभतेऽभिमतं पदम् ।
तत्पादाब्जं जनो नौमि नित्यं यत्पङ्कजद्वयम् ॥२
समुद्धृतं भागवताभिधानाद् दुग्धाम्बुधेर्नवनीतपिण्डम् ।
श्रीशङ्करेणाच्युतकिङ्करेण बुद्ध्या भुवध्वं शितया सुधीराः ॥३
समस्तशास्त्रसत्सारमुद्धृत्य विदधेऽधुना ।
भक्तिरत्नाकराख्यं तं संग्रहं शङ्करः किल ॥४

अथ प्रथमम्त्र भक्ति-ज्ञानप्रदगुरुसेवामाहात्म्यमाह—दशमस्कन्धे अशीत्यध्याये दरिद्रदामोदरं प्रति भगवद्वाक्यं । भक्ति-ज्ञानप्रदगुरुरत्यन्तः पूज्यः इत्याशयेन त्रीन् गुरूनाह ।

स वै सत्कर्म्मणां साक्षाद्द्विजातेरिह सम्भवः ।
आद्योऽङ्ग यत्राश्रमिणां यथाहं ज्ञानदो गुरुः ॥१

इह संसारे यत्र सम्भवो जन्म मात्रं यस्मात् सः पिता तावदाद्यः प्रथमो गुरुः पूज्यः । कर्म्मविद्याप्रदं गुरुमाह, द्विजातेः पुंसः सत्कर्म्मणां यत्र सम्भवः उपनयनपूर्व्वकमेवाध्ययनं सः द्वितीयो गुरुः । यथाहमीश्वरः तथा [illegible] पूज्याः ।

ब्रह्मविद्याप्रदं गुरुमाह—

आश्रमिणामपि सर्व्वेषां ज्ञानदो यो गुरुः स तु साक्षादहमेव । अतो ज्ञानप्रदं गुरुरूपमाश्रित्य वै संसारं तरन्ति ते बुद्धिमन्त इत्याह ।

नन्वर्थकोविदा ब्रह्मन् । वर्णाश्रमवतामिह ।
ये मया गुरुणा वाचा तरन्त्यञ्जो भवार्णवम् ॥२

हे ब्रह्मन् ! ते वर्णाश्रमवतां मध्ये अर्थकोविदाः । इह मनुष्य जन्मनि । [illegible] मया गुरुणा [illegible] वाचा [illegible] भवार्णवं तरन्ति, अतो ज्ञानदं गुरुमाश्रित्य वै [illegible]

ते बुद्धिमन्त इत्यर्थः। ज्ञानप्रदाद् गुरोरधिकः सेव्यो नास्तीत्युक्तम्। अतएव गुरुभजनादधिको धर्म्मो नास्तीत्यत आह।

नाहमिज्याप्रजातिभ्यां तपसोपशमेन वा।
तुष्येयं सर्व्वभूतात्मा गुरुशुश्रुषया यथा ॥३

इज्या गृहस्थधर्म्मः, प्रजातिः ब्रह्मचारिधर्म्मः ताभ्यां, तपसा वनस्थधर्म्मेन, उपशमेन सन्न्यासधर्म्मेन वाहं परमेश्वरो न तथा तुष्येयं यथा सर्व्वभूतात्मापि गुरुशुश्रूषयेति।

एकादशस्कन्धे तृतीयाध्याये निमिं प्रति प्रबुद्धवाक्यम्।

तस्माद् गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम्।
शाब्दे परे च निष्णातं ब्रह्मन्युपशमाश्रयम् ॥४

उत्तम श्रेयो ज्ञातुमिच्छुः। शाब्दे ब्रह्मणि वेदाख्ये न्यायतो निष्णातं तत्त्वज्ञं, अन्यथा संशयनिरासकत्वायोगात्। परे ब्रह्मन्यपरोक्षानुभवेन निष्णातम्, अन्यथा बोधसञ्चारायोगात्। परे ब्रह्मनि निष्णातत्व द्योतकमाह उपशमाश्रयमिति।

पञ्चमस्कन्धे रहूगणं प्रति भरतवाक्यम्। गुरुसेवयैव संसार निस्तार इत्याशयेनाह।

भ्रातृव्यमेतं तददभ्रवीर्य्यमुपेक्षयाध्येधितमप्रमत्तः।
गुरोर्हरेश्चरणोपासनास्त्रो जहि व्यलीकं स्वयमात्म-
मोषम् ॥५

तस्माद् भ्रातृव्यं शत्रुं लिङ्गदेहमित्यर्थः। अध्येधितं सम्वर्द्धितं स्वयं व्यलीकं मिथ्याभूतं तथाप्यात्मानम् मुष्णातीति मोषकमित्यर्थः। गुरुरेव हरिः तस्य चरणोपासनमेवास्त्रं यस्य तथाभूतः सन् जहि घातय। तस्मात् गुरुसेवयैव संसारनिस्तारः नान्यथेति निर्णीतम्।

इति भक्तिरत्नाकरे प्रथममाहात्म्यम्।

## द्वितीयमाहात्म्यम्

अथ नृदेहमाहात्म्यमाह—एकादशस्कन्धे विंशे अध्याये उद्धवं प्रति भगवद्वाक्यम्। एवमप्रयतमानं प्रमत्तं निन्दति।

नृदेहमाद्यं सुलभं सुदुर्ल्लभं प्लवं सुकल्पं गुरु-
कर्णधारम्।
मयानुकूलेन नभस्वतेरितं पुमान् भवाब्धिं न तरेत्
स आत्महा ॥१

नृदेहं प्लवं नावं प्राप्येत्यध्याहारः। यो भवाब्धिं न तरेत् स आत्महा। तत्र हेतवः, आद्यं सर्व्वफलानां मूलं एतदुपार्ज्जितकर्म्मभिः सर्व्वप्राप्तेः। किञ्च सुदुर्लभ उद्यमकोटिभिरपि प्राप्तुमशक्यम्। तथापि तु सुलभं यदृच्छया लब्धत्वात्। तञ्च सुकल्पं पटुतरं। किञ्च गुरुः संश्रितमात्र एव कर्णधारो नेता यस्य तम्। मया च स्मृतमात्रेणानुकूलमारुतेन प्रेरितम्।

तथा नवमाध्याये दत्तात्रेय वाक्यम्—

लब्ध्वा सुदुर्लभमिदं बहुसम्भवान्ते
मानुष्यमर्थदमनित्यमपीह धीरः।
तूर्णं यतेत न पतेदनुमृत्यु यावत्
निःश्रेयसाय विषयः खलु सर्व्वतः स्यात् ॥२

तस्माद् बहूनां सम्भवानां जन्मनाम् अन्ते मानुष्यम् अनित्यमप्यर्थदं पुरुषार्थप्रापकं दैवाल्लब्ध्वा इदं अनुमृत्यु अन्वनु निरन्तरं मृत्यवो यस्य तत् यावन्नपतेत् तावदेव तूर्णं शीघ्रं निःश्रेयसाय यतेत। विषयः पुनः सर्व्वतः पश्वादि योनिष्वपि स्यादेव।

तथा तत्रैव विंशेऽध्याये भगवद्वाक्यम्—

अनेन प्रकारेण ज्ञान-भक्तिसाधनत्वात् नरदेहं स्तौति।

स्वर्गिणोऽप्येतमिच्छन्ति लोकं निरयिणस्तथा।
साधकं ज्ञान-भक्तिभ्यामुभयं तदसाधकम् ॥३

दृष्टान्तत्वेनाह—निरयिण इति—ज्ञान-भक्तिभ्यां ज्ञान-भक्तयोस्तदुभयं स्वर्गि-नारकिशरीरम्। तथा षड्विंशे मोक्षप्रदत्वान्नृदेहं स्तौति—

मल्लक्षणमिमं कायं लब्ध्वा मद्धर्म्म आस्थितः।
आनन्दं परमात्मानमात्मस्थं समुपैति माम् ॥४

मल्लक्षणं मत्स्वरूपं लक्ष्यते येन तमिमं नरदेहं लब्ध्वा मद्धर्म्मे भक्तिलक्षणे आस्थितः सन् आत्मस्थं आत्मन्येव नियन्तृत्वेन स्थितं परमानन्दरूपं आत्मानं मां समुपैति प्राप्नोति।

तृतीये वैकुण्ठवर्णने ब्रह्मणो वाक्यम्—

प्रसङ्गात् शोचतीति—

येऽभ्यर्थितामपि च नो नृगतिं प्रपन्ना,
ज्ञानञ्च तत्त्वविषयं सहधर्म्म यत्र।
नाराधनं भगवतो वितरन्त्यमुष्य,
सम्मोहिता विततया बत मायया ते ॥५

नोऽस्माभिर्ब्रह्मादिभिः अर्थितां नृगतिं मनुष्यजातिं प्रपन्नाः प्राप्ताः सन्तः हरेराराधनं न कुर्व्वन्ति, कीदृशीं नृगतिं यत्र यस्यां धर्म्मसहितं तत्त्वज्ञानं भवति, अमुष्य-साधनत्वात् तस्याः। अमुष्य भगवतः विततया मायया नूनं निश्चितं सम्मोहिताः बतेति खेदे।

दशमस्कन्धे एकपञ्चाशदध्याये मुचुकुन्दवाक्यम्।

कामसुखं शूकरादिष्वपि सम्भवति, भगवद्भजनन्तु न मानुषजन्मव्यतिरेकत इति। अतो मानुषत्वं प्राप्य त्वामभजन्नतिमूढ़ इत्याह।

लब्ध्वा जनो दुर्ल्लभमत्र मानुषं
कथञ्चिदव्यङ्गमयत्नतोऽनघ।
पादारविन्दं न भजत्यसन्मतिः
गृहान्धकूपे पतितो यथा पशुः ॥६

अत्र कर्म्मभूमौ अव्यङ्गम् अविकलाङ्गं, किञ्च असन्ति विषयसुखे आसक्ति र्यस्य सः। गृहमेवान्धकूपस्तस्मिन् पतितः यथा पशुः तृणलोभेनान्धकूपे पततीति।

एकादशस्कन्धे सप्तमाध्याये दत्तात्रेयवाक्यम्—

गृहाद्यासक्तिः तिरश्चामप्यनर्थहेतुः मनुष्यस्य त्वतिनिन्दिता इत्याह।

यः प्राप्य मानुषं देहं मुक्तिद्वारमपावृतम्।
गृहेषु खगवत् सक्तस्तमारूढच्युतं विदुः ॥७

नृदेहं प्राप्य ये पुरुषा एकान्तभक्त्या कृष्णस्य पादारविन्दं न भजन्ति तेऽतिनिन्दिताः।

पञ्चमस्कन्धे ऊनविंशाध्याये देवानां वाक्यं। [illegible]मानं नरं निन्दन्ति

ज्ञात्वा नृजातिन्त्विह ये च जन्तवः,
ज्ञानक्रियाद्रव्यकलापसम्भृताम् ।
न चेद् यतेरन्नपुनर्भवाय ते,
भूयो वनौका इव याति बन्धनम् ॥८

ज्ञानञ्च तदर्थाः क्रियाश्च तदर्थानि द्रव्याणि च तेषां कलापेन सम्भृतां पूर्णाम् अपुनर्भवाय मोक्षाय वनौका इव वनौकसः पक्षिणो यथा लुब्धकेन मुक्ता अपि पुनर्यदि तस्मिन्नेव वृक्षे प्रमत्ताः विहरन्ति तर्हि यथा बध्यन्ते तद्वत् ।

नारदीये—

दुर्लभं मानुषं प्राप्य न स्मरन्तीह केशवम् ।
तेषामतीव मूर्खाणां विवेकः कुत्र तिष्ठति ॥९

शृणुध्वं मुनयः सर्व्वे सत्यमेतन्मयोच्यते ।
कायः सन्निहितापायः प्रीत्य एव जनार्द्दनः ॥१०

नरसिंहपुराणे नवमाध्याये यमवाक्यम्—

शुभमिहमुपलभ्य मानुषत्वं
सुकृतिवशेन वृथेन्द्रियार्थहेतोः ।
रमयति कुरुते न मोक्षमार्गं
स दहति चन्दनमेव भस्महेतोः ॥११

षष्ठे षोडशाध्याये चित्रकेतुं प्रति अनन्तवाक्यम् । योन्यन्तरेऽपि भोगादिसम्पादनं शक्यं, ज्ञानार्थं तु अत्रैव यतितव्यमित्याह ।

लब्ध्वेह मानुषीं योनिं ज्ञानविज्ञानसम्भवाम् ।
आत्मानं यो न बुध्येत न क्वचित् क्षेममाप्नुयात् ॥१२

ज्ञानं शास्त्रोत्थं विज्ञानम् अपरोक्षं तयोः सम्भवो यस्यां ताम्—इत्यादि वचनानुसारेण दुर्लभं प्राप्य ये पुरुषा कृष्णपादारविन्दं न भजन्ति ते अतिनिन्दिता इति निर्णीतम् ।

इति भक्तिरत्नाकरे द्वितीयमाहात्म्यम् ।

## तृतीयमाहात्म्यम्

इदानीं सत्सङ्गमाहात्म्यमाह—प्रथमस्कन्धे अष्टादशाध्याये शौनकादिवाक्यम् । सत्सङ्गमभिनन्दति—

तुलयाम लवेनापि न स्वर्गं नापुनर्भवम् ।
भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः ॥१

भगवत्सङ्गिनो विष्णुभक्ताः तेषां सङ्गस्य यो लवः अत्यल्पः कालः तेनापि स्वर्गं न तुलयाम न समं पश्याम । नचापवर्गं । मर्त्यानां तुच्छाशिषो राज्याद्याः न तुलयाम इति—किमु वक्तव्यम् ।

तृतीये सप्तमाध्याये विदुरः मैत्रेयमभिनन्दति । अहो दुर्लभं लब्धं मयेत्याह—

दुरापा ह्यल्पतपसः सेवा वैकुण्ठवर्त्मसु ।
यत्रोपगीयते नित्यं देवदेवो जनार्द्दनः ॥२

दुरापा दुर्लभा । वैकुण्ठस्य विष्णोः तल्लोकस्य वा वर्त्मसु मार्गभूतेषु महत्सु । यत्र येषु । जनयतीति जना माया भक्तस्य तामर्द्दयतीति जनार्द्दनः ।

महत्सेवया हरिकथाश्रवणं ततो हरौ प्रेम, ततो देहाद्यनुसन्धानमपि निवर्त्तत इति तात्पर्य्यार्थः ।

तथा पञ्चविंशाध्याये कपिलवाक्यम् । सत्सङ्गस्य [illegible] प्रेमभक्तिमुत्पादयति ।

सतां प्रसङ्गान्मम वीर्य्यसम्विदो
भवन्ति हृत्कर्णरसायनाः कथाः ।
तज्जोषणादाश्वपवर्गवर्त्मनि
श्रद्धारतिर्भक्तिरनुक्रमिष्यति ॥३

वीर्य्यस्य सम्यग्वेदनं यासु ताः वीर्य्यसंविदः हृत्-कर्णयोः रसायनाः सुखदाः कथाः। तासां जोषणात् सेवनात् अपवर्गस्य अविद्यानिवृत्तेः वर्त्म यस्मिन् तस्मिन् हरौ प्रथमं श्रद्धा, ततो रतिः, ततो भक्तिः अनुक्रमिष्यति क्रमेण भविष्यतीत्यर्थः ।

चतुर्थस्कन्धे नवमाध्याये ध्रुववाक्यम्। तत्कथा-श्रवणाय सत्सङ्गं देहीत्याशयेनाह ।

भक्तिं मुहुः प्रवहतां त्वयि मे प्रसङ्गो
भूयादनन्त महताममलाशयानाम् ।
येनाञ्जसोल्बणमुरुव्यसनं भवाब्धिं
नेष्ये भवद्गुणकथामृतपानमत्तः ॥४

त्वयि भक्तिं प्रवहतां सातत्येन कुर्व्वतां महतां सतां सङ्गो मम भूयात्। ननु किमिति मोक्षं न याचसे अत आह येनेति। येन सत्सङ्गेन भवाब्धिम् अञ्जसा सुखेन नेष्ये पारं गमिष्यामि ।

तत्रैव चतुर्व्विंशे रुद्रगीतायां—त्वत्पादमूले प्रविष्टस्य कृतान्तभयाभावः, कियानयं लाभः त्वद्भक्त-सङ्ग एव सकलपुरुषार्थश्रेणीशिरसि नरीनर्त्तीत्यत आह—

क्षणार्द्धेनापि तुलये न स्वर्गं नापुनर्भवम् ।
भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः ॥५

पञ्चमस्कन्धे त्रयोदशाध्याये भवाटवीवर्णनायामन्ते जडं प्रति रहूगणस्य प्रशंसा ।

नह्यद्भुतं त्वच्चरणाब्जरेणुभिः
हतांहसो भक्तिरधोक्षजेऽमला ।
मौहूर्त्तिकाद् यस्य समागमाच्च मे
दुस्तर्कमूलोऽपहतोऽविवेकः ॥६

उपासितैः त्वत्पदाब्जरेणुभिः हतम् अंहो यस्य तस्य अधोक्षजे निर्म्मला अव्यभिचारिणी भक्तिः भवतीति नैवाद्भुतम्। यस्य तव मुहूर्त्तमात्रं भवात् समागमन-मात्रादपि दुस्तर्केण बद्धमूलोऽपि मम अविवेकः अपहृतः विनष्टः ।

दशमस्कन्धे एकपञ्चाशदध्याये मुचुकुन्दवाक्यम्। संसारं प्रपञ्च्य तन्निवृत्तिक्रममाह—

भवापवर्गो भ्रमतो यदा भवेत्
जनस्य तर्ह्यच्युत सत्समागमः ।
सत्सङ्गमो यर्हि तदैव सद्गतौ
परावरेशे त्वयि जायते मतिः ॥७

भो अच्युत। भ्रमतः सञ्चरतः जनस्य यदा त्वदनुग्रहेण भवस्य संसारस्य अपवर्गः अन्तः भवेत् प्राप्तकालः स्यात्, तदा सत्सङ्गमो भवेत्; तदा सर्व्वसङ्गनिवृत्त्या कार्य्यकारणनियन्तरि त्वयि मतिर्जायते भक्तिर्भवेत् ततो मुच्यत इत्यर्थः ।

तत्रैवाक्रूरं प्रति भगवद्वाक्यम्। तर्हि मृच्छिलादि-मयाः किं देवादयो नेत्याह ।

नह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः ।
ते पुनन्त्युरुकालेन दर्शनादेव साधवः ॥८

अम्मयानि तीर्थानि मृन्मयाः शिलामयाश्च देवा न भवन्तीति न, अपितु भवन्त्येव। [illegible] तेभ्यश्च महत्त्वमित्याह ते पुनन्तीति ।

तत्रैव भगवद्वाक्यम्। ननु देवाः नृभिः सेव्याः इति प्रसिद्धं तत्राह—

भवद्विधा भागवताः सन्निसेव्या अनुत्तमाः।
श्रेयस्कामैर्नृभिर्नित्यं देवाः स्वार्था न साधवः ॥९

देवाः स्वकार्य्यसाधनपराः साधवस्तु परानुग्रहपराः परमार्थश्च साधव एव देवाः तीर्थानि च त एव मोक्षार्थिभिर्नरैः सेव्या इत्यर्थः।

एकादशस्कन्धे भगवद्वाक्यम्। तीर्थदेवादिसङ्गादपि सत्सङ्गः श्रेयानिति दर्शयति।

यथोपाश्रयमाणस्य भगवन्तं विभावसुम्।
शीतं भयं तमोऽप्येति साधून् संसेवतस्तथा ॥१०

विभावसुम् अग्निं सेवमानस्य यथा शीतं भयं तमश्चाप्येति नश्यति तथा कर्म्मजाड्यम् आगामि संसारभयं तन्मूलमज्ञानञ्च नश्यति। किञ्च—

अन्नं हि प्राणिनां प्राणा आर्त्तानां शरणं त्वहम्।
धर्म्मो वित्तं नृणां प्रेत्य सन्तोऽर्व्वाक् बिभ्यतोऽरणम् ॥११

यथा प्राणिनां अन्नमेव जीवनं अहमेव यथा आर्त्तानां शरणं, धर्म्म एव यथा प्रेत्य परलोके वित्तं तथा सन्त एव अर्वाक् संसारपतनात् बिभ्यतः पुंसः अरणं शरणम्।

सन्तो दिशन्ति चक्षूंषि बहिरर्कः समुत्थितः।
देवता बान्धवाः सन्तः सन्त आत्माहमेव च ॥१२

सन्तः चक्षूंषि सगुणनिर्गुणज्ञानादीनि, अर्कः पुनः सम्यगुत्थितोऽपि बहिः तदप्येकमेव चक्षुरित्यर्थः अतः सन्त एव देवताः, सन्त एव बान्धवाश्च, सन्त एव आत्मा च, सन्त एव अहमेव च। सत्सङ्गो नाम ममैव सङ्ग इत्यभिप्रेत्य उक्तम् देवतीर्थादधिकमिति।

चतुर्थस्कन्धे दशप्रचेतसं प्रति रुद्रवाक्यम्—

अथानघाङ्घ्रेस्तव कीर्त्तितीर्थयो-
रन्तर्बहिःस्नानविधूतपाप्मनाम्।
भूतेष्वनुक्रोशसुसत्त्वशीलिनाम्
स्यात् सङ्गमोऽनुग्रह एष नस्तव ॥१३

एकादशे द्वादशाध्याये उद्धवाय भगवान् परमं सुगोप्य कथयति। सांख्ययोगादीनि साधनान्तरसापेक्षाणि सव्यभिचाराणि च। सत्सङ्गस्तु स्वत एव समर्थः फलाव्यभिचारी च इति वर्णयितुम् अङ्गीकृत्याह।

न रोधयति मां योगो न सांख्यं धर्म्म एव च
न स्वाध्यायस्तपस्त्यागो नेष्टापूर्त्तं न दक्षिणा ॥
व्रतानि यज्ञश्छन्दांसि तीर्थानि नियमा यमाः
यथावरुन्धे सत्सङ्गः सर्वसङ्गापहो हि माम् ॥१४

एतैः पञ्चदशभिरुपायैः न रोधयति न वशं करोति। तत् किं? योगः अष्टाङ्गः आसनप्राणायामादिः सांख्यं तत्त्वानां विवेको धर्म्मः सामान्यतोऽहिंसादिः, स्वाध्यायो वेदजपः, तपः व्रतादिः, त्यागः सन्न्यासः, इष्टम् अग्निहोत्रादि, पूर्त्तं कूपादिनिर्म्माणम्, दक्षिणा दानं, व्रतानि एकादश्युपवासादीनि, यज्ञो देवपूजा, छन्दांसि रहस्यमन्त्राः तीर्थानि सर्वाणि सन्ति यानि, नियमाः शौचादिद्वादश, यमाः अहिंसादिद्वादश एतैस्तथा न, यथा सत्सङ्गः अवरुन्धे वशीकरोति।

किञ्च—

श्रवणाद्दर्शनाद्वापि महापातकिनोऽपि च।
शुध्येरनन्त्यजाश्चापि किमु सम्भाषणादिभिः ॥१३

एकान्तभक्तस्य श्रवणाद् दर्शनादपि महापातकिनोऽपि अत्यन्तान्त्यजातयोऽपि शुध्येरन् शुद्धाः भवन्ति; किं पुनः सम्भाषणादिभिरिति।

उपसंहारमाह—

ततो दुःसङ्गमुत्सृज्य सत्सु मज्जेत बुद्धिमान्।
सन्त एतस्य छिन्दन्ति मनोव्यासङ्गमुक्तिभिः ॥१४

उक्तिभिः हितोपदेशैरित्यर्थः।

इति भक्तिरत्नाकरे सत्सङ्गवर्णनं नाम तृतीय-माहात्म्यम्।

---

## चतुर्थमाहात्म्यम्

अथेदानीं सतां लक्षणमाह—

एकादशस्कन्धे एकादशाध्याये उद्धवं प्रति भगवद्वाक्यम्। तत्र त्रिंशल्लक्षणैः साधून्निरूपयति पञ्चभिः।

कृपालुरकृतद्रोहस्तितिक्षुः सर्व्वदेहिनाम्।
सत्यसारोऽनवद्यात्मा समः सर्व्वोपकारकः ॥१

कृपालुः परदुःखासहिष्णुः, सर्वदेहिनां केषाञ्चिदपि अकृतद्रोहः, तितिक्षुः क्षमावान्, सत्यं सारः स्थिरं बलं वा यस्य सः, अनवद्यात्मा असूयादिरहितः, सुखदुःखयोः समः यथाशक्तिः सर्व्वेषामुपकारकः।

कामैरक्षुभितो दान्तः मृदुः शुचिरकिञ्चनः।
अनीहो मितभुक् शान्तः स्थिरो मच्छरणो मुनिः ॥२

अनीहः दृष्टक्रियाशून्यः, मितभुक् लघ्वाहारः, शान्तः नियतान्तःकरणः, स्थिरः स्वधर्म्मे, मच्छरणः मदेकाश्रयः, मुनिः मननशीलः।

अप्रमत्तो गभीरात्मा धृतिमान् जितषड्गुणः।
अमानी मानदः कल्पो मैत्रः कारुणिकः कविः ॥३

अप्रमत्तः सावधानः गभीरात्मा निर्व्विकारः धृतिमान विपद्यपि अकृपणः जितषड्गुणः क्षुत्पिपासे, शोकमोहौ, जरामृत्यू एते षड्ूर्म्मयः जिता येन सः, अमानी, मनस्वी, अन्येभ्यो मानदः, कल्पः, परबोधने दक्षः, मैत्रः अवञ्चकः, कारुणिकः करुणयैव प्रवर्तमानः नतु दृष्टलोभेन, कविः सम्यग्ज्ञानी। किञ्च—

आज्ञायैवं गुणान् दोषान् मयादिष्टानपि स्वकान्।
धर्म्मान् सन्त्यज्य यः सर्वान् मां भजेत स सत्तमः ॥४

मया वेदरूपेण आदिष्टानपि धर्म्मान् सन्त्यज्य मां यो भजेत सोऽपि एवं पूर्व्वोक्तवत् सत्तमः। किमज्ञानात् किं नास्तिक्याद् वा, न, धर्म्माचरणे सत्त्वशुद्ध्यादीन् गुणान् विपक्षे नरकपातादीन् दोषांश्च आज्ञाय ज्ञात्वापि मद्ध्यानविक्षेपकतया मद्भक्त्यैव सर्वं भविष्यति इति दृढनिश्चयेनैव धर्म्मान् सन्त्यज्य त्यक्त्वा, यद्वा अधिकारित्वेन निवृत्ताधिकारतया सन्त्यज्य, अथवा विहितैकादश्युपवास-कृष्णैकादश्यनुपवासादिनिषेधाज्ञादयो ये भक्तिविरोधिनः धर्म्मास्तान् सन्त्यज्य इत्यर्थः। किञ्च—

ज्ञात्वाज्ञात्वा च ये वै मां यावान् यश्चास्मि यादृशः ।
भजन्त्यनन्यभावेन ते मे भक्ततमा मताः ॥५

यावान् देशकालापरिच्छिन्नः, यश्च सर्व्वात्मा यादृशः सच्चिदानन्दरूपः तं मां ज्ञात्वा अज्ञात्वापि। यद्वा विशेषतः पुनः पुनः ज्ञात्वा एकान्तभावेन ये भजन्तीति ।

तथाच पुराणान्तरे—

नारायणो जगन्नाथो वासुदेवो जनार्द्दनः ।
इतीरयन्ति ये नित्यं ते वै सर्वत्र वन्दिताः ॥६

वैष्णवानन्दलहरौ—

गायन्ति वैष्णवाः सर्व्वे कृष्णेति नाममङ्गलं ।
सर्वत्र मङ्गलं तेषां नास्ति तेषाममङ्गलम् ॥७

तथा—

गायन्ति वैष्णवाः सर्वे हरेर्नामानुकीर्त्तनम् ।
त्यक्त्वा च मम नामानि नान्यद्गायन्ति वैष्णवाः ॥८

तथाच—

यो मे भक्तजनालापी स मद्भक्तश्च सज्जनः ।
मम भक्तानाञ्च ये भक्ता ममभक्ताश्च ते जनाः ॥६

किञ्च—

कामादिगुणसंयुक्ता नाममात्रैकबान्धवाः ।
प्रीतिं कुर्वन्ति ते पार्थ ! न तथा जितमद्गुणाः ॥१०

इति भक्तिरत्नाकरे सत्सङ्गवर्णनं नाम
चतुर्थमाहात्म्यम् ।

## पञ्चममाहात्म्यम्

अथ परमगतिप्रदभजनीयपरमदेवतामाहात्म्यमाह—

विश्वसर्गविसर्गादिनवलक्षणलक्षितम् ।
श्रीकृष्णाख्यं परं धाम जगद्धाम नमाम तत् ॥१

तृतीये नवमे ब्रह्मणस्तुतौ भगवज्ज्ञानेनात्मनः कृतार्थता-माविष्कुर्व्वन्नज्ञांश्च शोचयन्नाह ।

ज्ञातोऽसि मेऽद्य सुचिरान्ननु देहभाजां,
न ज्ञायते भगवतो गतिरित्यवद्यम् ।
नान्यत्त्वदस्ति भगवन्नपि तन्न शुद्धं,
मायागुणव्यतिकराद् यदुरुर्विभासि ॥२

सुचिरात् बहुकालोपासनेन, अद्य मे मया ज्ञातोऽसि। नन्वहो देहभाजां एतदवद्यं दोषः, किन्तत्? यद् भगवतस्तवगतिस्तत्वं न ज्ञायत इति। यतः त्वमेव ज्ञातुं योग्यः सत्यत्वात्। नान्यदसत्यत्वादित्याह त्वदिति. त्वत्तोऽन्यन्नास्ति यद्यप्यस्तीति प्रतिभाति तदपि शुद्धं सत्यं न भवति। ननु कथमसतः प्रतीतिः? तत्राह यद् यतः माया गुणक्षोभात् त्वमेव उरुर्वहुरूपो विभासि ।

तत्रैव ननु त्वमपि सम्यक् न जानासि यत्त्वया दृष्टं रूपमेव एतदपि गुणात्मकमेव, निर्गुणं ब्रह्मैव तु सत्यं तत्राह द्वाभ्याम् ।

रूपं यदेतदवबोधरसोदयेन
शश्वन्निवृत्ततमसः सदनुग्रहाय ।
आदौ गृहीतमवतारशतैकबीजं
यन्नाभिपद्मभवनादहमाविरासम् ॥३

अववोधरसोदयेन चिच्छक्त्याविर्भावेण, शश्वत् सदा निवृत्तं तमो यस्मात् तद् तव यदेतद्रूपं त्वयैव स्वातन्त्र्येण सतामुपासकानाम् अनुग्रहाय गृहीतमाविष्कृतम्। अवतारशतस्य शुद्धसत्त्वात्मकस्य यदेकं बीजं मूलं तत्प्रदर्शनार्थं गुणावतारबीजत्वं दर्शयति। †

नातः परं परम ! यद्भवतः स्वरूप-
मानन्दमात्रमविकल्पमविद्धवर्च्चः।
पश्यामि विश्वसृजमेकमविश्वमात्मन्
भूतेन्द्रियात्मकमदस्त उपाश्रितोऽस्मि ॥४

भाः ३।९।३

हे परम ! अविद्धवर्च्चः अनावृतप्रकाशम् अतः अविकल्पं निर्भेदम् अतएव आनन्दमात्रम्; एवम्भूतं यद्भवतः स्वरूपं तत्, अतो रूपात् परं भिन्नं न पश्यामि, किन्तु इदमेव तत्। अतः कारणात् ते तव अदः इदं स्वरूपं उपाश्रितोऽस्मि। याग्यत्वादपीत्याह। एकम् उपास्येषु मुख्यं यतः, विश्वसृजं, विश्वं सृजतीति; अतएवाविश्वं विश्वस्मादन्यत्। किञ्च भूतेन्द्रियात्मकं भूतानामिन्द्रियानाञ्च आत्मानं कारणमित्यर्थः। †

नन्वेवमपि सोपाधिकमेतदर्व्वाचीनमेवेत्याशंक्याह।

तद् वा इदं भुवनमङ्गल ! मङ्गलाय
ध्याने स्म नो दर्शितं त उपासकानाम्।
तस्मै नमो भगवतेऽनुविधेम तुभ्यं
योऽनादृतो नरकभाग्भिरसत्प्रसङ्गैः ॥५

भाः ३।९।४

तद्वै तदेवेदं। हे भुवनमङ्गल ! यतः ते त्वया नोऽस्माकमुपासकानां मङ्गलाय मोक्षाय, ध्याने दर्शितं प्रकाशसमर्त्थाभिनिवेशितचित्तानाम् अस्माकं त्वया सोपाधिकदर्शनं दातुं युक्तमिति भावः। अतस्तुभ्यं नमोऽनुविधेम अनुवृत्त्या करवाम। तर्हि किमिति केचिन्मां नाद्रियन्ते ? तत्राह योऽनादृत इति, नरकभाग्भिः श्रवणादिविमुखैः निष्कामकर्म्मपरैः असत्प्रसङ्गैः निरीश्वरकुतर्कनिष्ठैः। †

अष्टमे षष्ठाध्याये ब्रह्मादीनां वाक्यम्। भूतेः सनातनत्वमपरिमेयत्वञ्चोपपादयति।

रूपं तवैतत् पुरुषर्षभेज्यं
श्रेयोऽर्थिभिर्व्वैदिकतान्त्रिकेण।
योगेन धातः ! सह नस्त्रिलोकान्
पश्याम्यमुष्मिन् नु ह विश्वमूर्त्तौ ॥६

भाः ८।६।९

हे पुरुषर्षभ ! हे धातः। एतत्तव रूपं वैदिकतान्त्रिकयोगेन उपायेन श्रेयोऽर्थिभिः सदा इज्यं पूज्यम्; अतो नेदमिदानीम् अपूर्व्वं जातमिति भावः। ननु यूयं देवाः पूज्यत्वेन प्रसिद्धाः सत्यं, सर्व्वेऽप्यत्रैवान्तर्भूता इत्याह—

उ अहो ह स्फुटं अमुष्मिन् त्वयि नोऽस्मान् त्रीलोकांश्च सह पश्यामि। तत्र हेतुमाह—विश्वं मूर्त्तौ यस्य, अतस्तव तद्रूपं परिच्छिन्नमपि न भवतीति भावः। †

विश्वमूर्त्तित्वमेवाह—

त्वय्यग्र आसीत् त्वयि मध्य आसीत्
त्वय्यन्त आसीदिदमात्मतन्त्रे।
त्वमादिरन्तो जगतोऽस्य मध्यं
घटस्य मृत्स्नेव परः परस्मात् ॥७

भाः ८।६।१०

घटस्य मृत्तिका यथा आदिरन्तश्च तथा [illegible] जगतः। तत्र हेतुः परस्मात् प्रधानादपि परः। †

† श्रीधरटीकैव गृहीता।

दशमे चतुर्दशाध्याये ब्रह्मणो वाक्यम्। त्वमेव सत्य इत्याह—

एकस्त्वमात्मा पुरुषः पुराणः
सत्यः स्वयं ज्योतिरनन्त आद्यः।
नित्योऽक्षरोऽजस्रसुखो निरञ्जनः
पूर्णोऽद्वयो मुक्त उपाधितोऽमृतः ॥८

भाः १०।१४।२३

एकस्त्वं सत्यः। कुतः ? आत्मा, दृश्यम् असत्यं दृष्टं नचात्मा दृश्यः, अतः सत्यः। किञ्च यद् विकारवत् तदसत्यं। न च त्वयि जन्मादयोविकाराः सन्तीत्याह— आद्यः कारणम् अतो न जन्म। आद्यत्वे हेतुः— पुराणः, सृष्ट्यादिकार्य्यात् पूर्व्वमपि वर्त्तमान इत्यर्थः। अत्र हेतुः पुरुष इति। जन्मानन्तरास्तित्वलक्षणं विकारं वारयति नित्य इति, सनातन इत्यर्थः। पूर्णोऽजस्र सुखोऽक्षरोऽमृत इति। चतुर्भिः पदैः क्रमेण वृद्धि-विपरिणामापक्षयविनाशान् वारयति। पूर्णत्वे हेतुः, अनन्तोऽद्वय इति च देशकालपरिच्छेदरहितो वस्तु परिच्छेदरहितोऽपि। अमृतत्वोपपादनाय चतुर्व्विध-क्रियाफलत्वम्वारयति—स्वयं ज्योतिः निरञ्जनः उपाधितो मुक्त इति पदत्रयेण। अयं भावः—तत्रोत्पत्तिः आद्यइत्यनेनैव निराकृता, प्राप्तिरपि क्रियया ज्ञानेन वा भवेत्। क्रिययाप्राप्तिरात्मपदेनैव निराकृता, ज्ञानतः प्राप्तिं वारयति स्वयं ज्योतिरिति। विकृतिरपि तुषा-पाकरणेनावघातेन व्रीहीणामिव उपाध्यपाकरणेन भवेत्, तच्चासङ्गत्वान्न भवति, अत आह मुक्त उपाधित इति। संस्कारोऽपि किमप्यतिशयाधानेन मलापाकरणेन वा। तत्रातिशयाधानं पूर्णत्वेनैव निराकृतम्। मलापाकरणं निवारयति निरञ्जन इति निर्म्मल इत्यर्थः। †

तस्मादेवम्विधज्ञानान्मुच्यत इत्याह।

एवंविधं त्वां सकलात्मनामपि
स्वात्मानमात्मात्मतया विचक्षते,
गुर्व्वर्कलब्धोपनिषत्सुचक्षुषा
ये ते तरन्तीव भवानृताम्बुधिम् ॥९

भाः १०।१४।२४

त्वां ये विचक्षते सम्यक् पश्यन्ति। कथमात्मा-त्मतया आत्माप्रत्यक् तस्य स्वरूपेण। न चैतत् पुत्रादिष्विव गौणमित्याह। सकलात्मनामपि स्वात्मानं। केन गुरुरेव अर्क स्तस्मात् लब्ध्वा उपनिषद् ज्ञानं तदेव सुचक्षुः तेन भव एवानृताम्बुधि स्तं ते तरन्तीव। *

ननु परमार्थज्ञानादज्ञानकृतो बन्धो निवर्त्ततां आत्मात्मतयैव विज्ञानात् इति कोयमाग्रह इत्याशंक्य यदध्यासादात्मनः पररूपा स्फुर्त्तिः तदपवादेन तत्रैव ज्ञानं युक्तमितीममर्थं विस्मयेनाक्रोशन्निवाह।

तत्रैव—

त्वामात्मानं परं मत्वा परमात्मानमेव च।
आत्मा पुनर्वहिर्मृग्य अहोऽज्ञजनताज्ञता ॥१०

भाः १०।१४।२७

त्वामात्मानं परं देहादिं मत्वा आत्मानि देहादिमध्यस्य तथा परं देहादिमात्मानं मत्वा देहादावात्मानमध्यस्य अत्र नष्ट आत्मा वहिर्मृग्य इति चित्रम्। नहि गृहे नष्ट वने मृग्यत इत्यर्थः।

नन्वेवं ज्ञानैकसाध्ये मोक्षे किमिति भक्तिरुद्बोधिता ? अत आह।

अथापि ते देव पदाम्बुजद्वय-
प्रसादलेशानुगृहीत एव हि।
जानाति तत्त्वं भगवन्महिम्नो
नचान्य एकोऽपि चिरं विचिन्वन् ॥११

भाः १०।१४।२९

† श्रीधरस्वामिटीकैव गृहीता।

* भक्तिरत्नावल्यामपि धृतः श्लोकः।

यद्यपि हस्तप्राप्यमिव ज्ञानमुक्तं तथापि हे देव! तव पादाम्बुजमध्ये एकदेशस्यापि य प्रसादलेशोऽपि तेनानुगृहीत एव भगवत् स्तव महिम्नः तत्त्वं जानाति। हे भगवनते महिम्नः तत्वमिति वा। एकोपि कश्चिदपि चिरमपि विचिन्वन्नपि अतद्दंशापवादेन विचारयन्नित्यर्थः। †

तत्रैव शुकवाक्यं—

ननु देही कथमनावृतः स्यादत आह—

नृणां निःश्रेयसार्थाय व्यक्तिर्भगवतो नृप।
अव्ययस्याप्रमेयस्य निगणस्य गुणात्मनः॥ १२

भाः १०।२९।१४

गुणात्मनः गुणनिलयस्य भगवतः एवंरूपाभिव्यक्तिः अतो न देहिसादृश्यमपि वक्तुं युज्यत इति भावः। अतो यथाकथञ्चित् तदासक्तिः मुक्तिकारणमित्याह।

कामं क्रोधं भयं स्नेहमैक्यं सौहृदमेव च।
नित्यं हरौ यिदधतो यान्ति तन्मयतां हि ते॥ १३

भाः १०।२९।१५

ऐक्यं सम्बन्धं सौहृदं भक्तिन्। न च भगवतोऽजमतिभारः इत्याह—

नचैवं विस्मयः कार्य्यो भवता भगवत्यजे।
योगेश्वरे सुरे कृष्णे यत एतद् विमुच्यते॥ १४

भाः १०।२९।१६

यतः श्रीकृष्णात्, एतत् स्थावरादिकमपि मुच्यते।

तत्रैव चतुर्द्दशे नृपं प्रति शुकोक्तिः। जगतां कृष्ण एवात्मा इति दर्शयन्नाह। †

कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम्।
जगद्धिताय सोऽप्यत्र देहीवाभाति मायया॥ १६

भाः १०।१४।५५

न केवलमात्मनामात्मा अपितु जड़ानामपीत्याह।

वस्तुतो जानतामत्र कृष्णं स्थास्नु चरिष्णु च।
भगवद्रूपमखिलं नान्यद्वस्त्विह किञ्चन॥ १७

भाः १०।१४।५६

सर्व्वजगत्कारणमिति कृष्णं जानतां पुंसां स्थावरं जङ्गमञ्च सर्व्वं भगवद्रूपं भगवानेव स्वरूपं यस्य तत् नान्यत्।

कुत इति तदाह—

सर्व्वेषामपि वस्तूनां भावार्थो भवति स्थितः।
तस्यापि भगवान् कृष्णः किमतद्वस्तु रूप्यताम्॥ १८

भाः १०।१४।५७

भावार्थः परमार्थः भवति भवत् परिणामं प्राप्नुवत् कारणं तस्मिन्, तस्यापि भवतः कारणस्यापि भगवान् कृष्णो भवत् कारणं, अतः किमतत् श्रीकृष्णव्यतिरिक्तं वस्तु रूप्यताम्। तस्मात् श्रीकृष्णस्यैव [illegible] तदेकशरणावामयत्नसिद्धो मोक्ष इति प्रकरणार्थं [illegible]।

समाश्रिता ये पदपल्लवप्लवं
महत्पदं पुण्ययशोमुरारेः।
भवाम्बुधिर्व्वत्सपदं परं पदं
पदं पदं यद् विपदां न तेषाम्॥ १९ *

भाः १०।१४।५८

पुण्यं यशो यस्य स पुण्ययशाः स चासौ मुरारिश्चेति तस्य पदपल्लवः स एव प्लवः तं समाश्रिताः, महत्पदं महतां पदम् [illegible], [illegible] महच्च तत् पदञ्चेति तथा तेषां [illegible] भवति। किञ्च परं पदं वैकुण्ठाख्यं [illegible] भवति। विपदां यत् पदं [illegible]

---

† सम्यत्र स्वामिटीकैवानुसृता।

* भक्तिरसामृतसिन्धुः ७।१४

कदाचिदपि तेषां न भवति, न ततः पुनरावर्त्तेत इत्यर्थः। †

एकादशे श्रीकृष्णं प्रति उद्धवोक्तिः।

यतो ब्रह्मादीनामपि त्वमीश्वरः अतस्त्वां परित्यज्य को नामान्यं संश्रयेदित्याह।

तं त्वाखिलात्मदयितेश्वरमाश्रितानां
सर्वार्थदं स्वकृतविद्विसृजेव को नु।
को वा भजेत् किमपि विस्मृतयेऽनुभूत्यै
किम्वा भवेन्न तव पादरजोजुषां नः॥ २०

भाः ११।२९।६

बलिप्रह्लादादिषु त्वया कृतमनुग्रहं जानन्। यद्वा अस्मिन्नेवान्तर्यामितया कृतमुपकारं विद्वान्। तदेवाह—अखिलस्य जगतः आत्मानं चेतयितारं आत्मत्वादेव दयितं प्रेष्ठं सेव्यम् ईश्वरत्वात्, अवश्यं भजनीयम्। किञ्च—आश्रितानां सर्व्वार्थदं। तर्हि किं फलोद्देशेनाह सेव्यः? नहि नहि त्वद्व्यतिरिक्तं किमपि अतितुच्छं स्वर्गादि तदपि (१) कोवा भजेत् सेवेत? कथम्भूतं तत् यत् केवलं भूत्यै इन्द्रियभोगाय। अनु अनन्तरमेव तद्विस्मृतये भवति। यद्वा तद्व्यतिरिक्तं किमपि देवतान्तरं धर्म्मज्ञानधनादिसाधनं वा भूत्यै ऐश्वर्य्याय संसारस्य विस्मृतये मोक्षाय वा को भजेत? न कोऽपि।

ननु तत्तत्साधनं विना भोग्यमोक्षादि (२) फलं कथं स्यात् तत्राह किम्वेति। तदुक्तं—

या वै साधनसम्पत्तिः पुरुषार्थचतुष्टये।
तया विना तदाप्नोति नरो नारायणाश्रयः इति॥२१

तत्रैवाष्टमे पिङ्गलाशिक्षितमाह।

ननु ब्रह्मादयो बहवः सन्ति, किमेकं श्रीकृष्णमेव सेवार्थमुद्यमः ‡ क्रियते तत्राह।

संसारकूपे पतितं विषयैर्म्मुषितेक्षणम्।
दष्टं (४) कालाहिनात्मानंकोऽध्यन्यस्त्रातुमीश्वरः॥२२

भाः ११।८।४०

विषयैर्म्मुषितेक्षणम् अपहृतज्ञानम् अचेतनमित्यर्थः। कालसर्पेन दष्टं एवम्भूतात्मानं श्रीकृष्णादन्यः कस्त्रातुमीश्वरः न कोऽपीत्यर्थः (६)।

चतुर्थं अष्टमे ध्रुवं प्रति मुनीष्टिवाक्यम्। भगवतः श्रव्योत्तमत्वमाह—

नान्यततस्तः पद्मपलाशलोचनाद्
दुःखच्छिद्वदं ते मृगयामि कञ्चन।
यो मृग्यते हस्तगृहीतपद्मया
श्रियेतरै रङ्ग विमृग्यमाणया (७)॥२३

भाः ४।८।२३

अत्र हेतुः य इति। इतरैर्ब्रह्मादिभिः (१)।

तत्रैव एकादशे ध्रुवं प्रति मनोर्व्वाक्यम्। यद्यपि

१। † श्रीधरस्वामि व्याख्यानमेव गृहीतम्। १। "त्वया दत्तमपि" इति मुद्रित स्वामिटीका। २। भोगेति आदर्शे पाठः। ‡ अत्रापि स्वामिव्याख्यानमेवानुसृतम्। ४। ग्रस्तमिति मुद्रितभागवते मुद्रितभक्तिरत्नावल्यामपि पाठः। ५। "कोऽन्यस्त्रातुमधीश्वरः" इति मुद्रित पुस्तके। मुद्रित भक्तिरत्नावल्यांतु "कोऽन्यस्त्रातुमिहेश्वर" इति पाठः। ६। अत्र स्वामिटीका—ब्रह्मादीन् हित्वा अच्युतेनैवेति कोऽन्यनियमस्तत्राह संसारेति। मुषितेक्षणम् अपहृत विवेकम्" इत्यादिव्याख्यानम्। ७। रत्नावल्यामपि धृतः। १। अत्र हस्तेन गृहीतं लीलापद्मं यया इति स्वामिटीकायामधिकम्। † गृहीत्वेति पदाध्याहारेणान्वयः कार्यः।

ईश्वर एव कर्त्ता मथापि अहङ्कारादि मया (१) त्यक्तुं न शक्यमिति चेदत आह—

तमेव मृत्युममृतं तात दैवं सर्व्वात्मनोपेहि जगत् परायणं ।
यस्मै वलिं विश्वसृजो हरन्ति गावो यथा वै (२) ।
नसि दाम यन्त्रिताः ॥२४ भाः ४।११।२६

मृत्युमभक्तानां भक्तानान्त्वमृतम् उपेहि शरणं गच्छ तमेवेत्यवधारणहेतुः । यस्मै नसि नासिकायां दामभिर्ब्बद्धाः गाव इव विश्वसृजो ब्रह्मादयोऽपि नामभिर्यन्त्रिताः वद्धाः सन्तो वलिं हरन्ति तत्कारित कर्म्म कुर्व्वन्तीत्यर्थः (३) ।

अष्टमे चतुर्व्विंशे सत्यव्रतस्तुतौ परमेश्वरत्वं परमगुरुत्वञ्च प्रतिपादयन्नाह (४)—

न यत् प्रसादायुतभागलेश-
मन्ये च देवाः गुरवो जनाः स्वयम् ।
कर्त्तुं समताः प्रभवन्ति पुंसः
समीश्वरं त्वां शरणं प्रपद्ये ॥२५ भाः †
८।२४।१८

यत् प्रसादस्यायुतभागस्तस्य लेशमपि अन्ये देवादयः सर्व्वसमेता अपि स्वयं तन्निरपेक्षाः सन्तः कर्त्तुं न प्रभवन्ति । तमीश्वरं त्वां शरणं प्रपन्नोऽस्मीति (५) ।

तत्रैव ननु तर्हि सर्व्वोऽपि लोको मामेव किं नोपसरति अज्ञानादित्याह—

त्वं सर्व्वलोकस्य सुहृत् प्रियेश्वरो
ह्यात्मा गुरुर्ज्ञानमभीष्टसिद्धिदः (६)
तथापि लोको नभवन्तमन्धधी-
र्जानाति सन्तं हृदिबद्धकामः ॥२६
भाः ८।२४।११

वृहन्नारदीये—

सत्यं सत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते ।
नास्ति वेदात् परं शास्त्रं न देवः केशवात् परः ॥२७
वृः नाः पुः १।१।६

तत्रैव—यथा हरित पदे सर्व्वं पदमात्रं प्रलीयते ।
तथा चराचरं विश्वं कृष्ण एव प्रलीयते ॥२८
वृः नाः पुः ६२।४१

पाण्डवी गीतायां विदुरवाक्यम्—

आलोच्य सर्व्वशास्त्राणि विचार्य्य च पुनः पुनः ।
इदमेव सुनिष्पन्नं ध्येयो नारायणः सदा ॥२९
पाः गीः ११ श्लोः

तत्रैवव्यासवाक्यम्—

सत्यं सत्यं पुनः सत्यं युक्तिमद्विदुरोऽब्रवीत् ।
नास्ति वेदात् परंशास्त्रं न देवः केशवात् परः ॥३०
पाः गीः १२ श्लोः

कश्च ईशश्चेति केशः द्वावपि मायया वशयतीति केशवः (७) । सर्व्वशास्त्रसारमुद्धृत्य भगवता वर्णितम्—

एकं शास्त्रं देवकीपुत्रगीतम्
एको देवो देवकीपुत्र एव ।
कर्म्माप्येकं तस्य देवस्य सेवा
मन्त्रोऽप्येकः तस्य देवस्य नाम ॥३१

१। भवत्वमित्यादर्शे पाठः। २। यथोत इति मुद्रित भागवते पाठ। ३। स्वामिटीकानुसृता। ४। [illegible] [illegible]। ५। स्वामिटीकातः अविकमेतत्। ६। अभीष्टदोऽसिदिति मुद्रित भागवते पाठ। † भक्तिरत्नाकरस्यां [illegible]। [illegible] ७। कश्च अश्च ईशाश्च कृताद्विमूर्त्तयः मेवशे वर्त्तन्ते यस्य सः केशवः। इति विष्णु सहस्रनाम भाष्ये।

भुजङ्गप्रयाते परमहंसभट्टाचार्य्येणोक्तम्—

मुखे मन्दहासं नखेन्दुप्रकाशं
करे चारुचक्रं सुरेशाभिवन्द्यं ।
भुजङ्गे शयानं भजे विश्वनाथं
हरेरन्यदेवं न मन्ये न मन्ये (१) ॥३२

वेदैश्च सर्व्वैरहमेव वेद्य इत्यादि भगवद्वचनात् कृष्ण एव भजनीय परमदेवता परमगतिदाताच नान्य इति दर्शयन्नाह—

देवबाक्येन—

अविस्मितं तं परिपूर्णकामं
स्वेनैव लाभेन समं प्रशान्तम् ।
बिनोपसर्पत्यपरं हि बालिशः +
श्वलाङ्गुलेनातितितर्त्ति (२) सिन्धुम् ॥३३
भाः ६।६।२०

अविस्मितं निरहङ्कारं कुतूहलशून्यं वा ॥ कुतः? प्रशान्तं रागादिशून्यं तत् कुतः? स्वेनैव लाभेन परिपूर्णकामं समं परिच्छेदशून्यं एवंभूतं परमेशं विना अपरं यः यः शरणार्थमुपसर्पति स बालिशः अज्ञः— यतोऽसौ शुनो लाङ्गुलेन समुद्रमतितितर्त्ति अतितर्त्तुमिच्छति यथा तेन समुद्रतरणं न सम्भवति तथा अनीश्वराश्रयेन व्यसनार्णवतरणं न सम्भवतीत्यर्थः (३) ।

दशमे द्वितीये ब्रह्मेशानस्तुतो कृष्ण एवास्य जगतः कारणं नान्य इत्याशयेनाह—

त्वमेक एवास्य सतः प्रसूतिः
त्वं सन्निधानं त्वमनुग्रहश्च ।
त्वन्मायया सम्वृतचेतसस्त्वां
पश्यन्ति नाना न विपश्चितो ये ॥३४
भाः १०।२।२६

एतद्रूपस्य संसारवृक्षस्य सतः कार्य्यस्य त्वमेक एव प्रसूतिः—प्रकर्षेण सूतिर्जन्म यस्मात् सः कारणमित्यर्थः। त्वमेव सन्निधानं सम्यङ्निधियते अस्मिन्निति लयस्थानं त्वमेवानुग्रहोऽपिअनुगृह्णातीति पालकः। ननु ब्रह्म-विष्णुरुद्रा एव स्तुत्याः प्रसिद्धाः कथमहमेवमिति चेत् तत्राहुः—त्वमाययेति तन्मयया सम्वृतं पिहितं चेतो ज्ञानं येषां ते त्वामेव नाना पश्यन्ति ये तु विपश्चितः विद्वांसः ते तथा न पश्यन्तीति (१) ।

ननु दैवकीपुत्रं मां कथमेवं वर्णययेति चेत तत्राहुः

बिभर्षि रूपाण्यवबोध आत्मा
क्षेमाय लोकस्य चराचरस्य ।
सत्त्वोपपन्नानि सुखावहानि
सतामभद्राणि मुहुः खलानाम् ॥३५
भाः १०।२।२६

अवबोधैक स्वरूप आत्मा त्वं रूपाणि मूर्त्तीः बिभर्षि धतसे न त्वं कस्यापि पुत्र इत्यर्थः। क्षेमाय कल्याणाय* सतां स्वधर्म्मवर्तिनां सुखकराणि खलानाममद्राणि नाशकानि। न केवलं एतावद् भक्तानां मोक्षार्थ-मपीत्याहुः (१) ।

---

१। मुद्रितशङ्कराचार्य्य ग्रन्थावल्यां विष्णुभुजङ्गप्रयातस्तोत्रे नेदानीमेषः श्लोको लभ्यते। शिवभुजङ्गप्रयात स्तोत्रे तु चतुर्थपादः "हरादन्यदेवं न मन्ये न मन्ये" न इत्येवमुपलभ्यते। २। "नैव" इत्याकरग्रन्थे। ३। स्वामिव्याख्यानमेवानुसृतम्। + भक्तिरसामृतसिन्धावपि धृतः। १३।५ * पालनायेति मुद्रितस्वामिटीकापाठः। १। स्वामिटीकैवोद्धृता।

त्वय्यम्बुजाक्षाखिलसत्त्वधाम्नि
समाधिनावेशितचेतसैके।
त्वत्पादपोतेन महत्कृतेन
कुर्व्वन्ति गो-वत्सपदं भवाब्धिम् † ॥४६

भाः १०।२।३०

त्वयि समाधिना आवेशितचेतसा निमित्तेन त्वत्पाद पोतेनआश्रितेन ** एके मुख्या विवेकिनः महद्भिः कृतेन सेव्यतया सम्पादितेत। यद्वा इकमपि मायामयमित्यनादरं परित्तज्येदमेव महत् सर्व्वोत्कृष्टमिति मनसि मनसि कृतेन बहुमतेनेत्यर्थः (१)। भवाब्धिं तुच्छं कुर्व्वन्ति अनायासेनैव भजसानुसिष्पादीनी (२) तेषां मुक्तिरित्यर्थः।

विघ्नैरभिभूयन्ते न आद्दतौ युष्मदङ्घ्री यैस्ते। त्वदीयास्तु कदाचिदपि न पतन्तीत्याहुः।

तथा न ते माधव तावकाः क्वचिद्-
भ्रश्यन्ति मार्गात्त्वयि वद्धसौहृदाः।
त्वयाभिगुप्ता विचरन्ति निर्भयाः
विनायकाणीक प मुर्द्धसु प्रभो ॥३७

भाः १०।२।३४

विनायकाः विघ्नहेतवः—तेषामणीकानि समूहाः (३) तानि पान्ति ये तेषां मूर्द्धसु विचरन्ति विघ्नान् जयन्तीत्यर्थः (४)।

तत्रैबाष्टत्रिंशे अक्रूरागमने अङ्घ्रिपद्मं विभावयति

यदर्च्चितं ब्रह्मभवादिभिः सुरैः
श्रिया च देव्या मुनिभिः स सात्वतैः।
गोचारणायानुचरैश्चरद्वने
यद् गोपिकानां कुचकुङ्कुमाङ्कितम् (५) ॥३८

भाः १०।३८।८

ब्रह्मभवादिभिरिति परमेश्वरत्वं श्रिया चेति परमसौभाग्यातिशयं मनिभिः सात्वतसहितैरिति परमपुरुषार्थत्वं गोचारयणायेति कृपालुत्वं भक्तवात्सल्यात् यद्गोपिकानामिति प्रेमसुलभत्वं दर्शितमित्यर्थः (६)।

यत् सर्व्वतीर्थप्रभवं सुरार्च्चितं
संसेवतां पूरयितुं सुरद्रुमम्।
सारं सुसेव्यं परमावलम्बनं
श्वेतातपत्रं भवतापनोदनम् ॥३९

यत् सर्व्वतीर्थमिति यद् यस्य चरणपङ्कजं सर्व्वतीर्थप्रभवम्, एतेन परमपावनत्वं दर्शितं। सुरार्च्चितमिति परकपूज्यत्वं संसेवतामिति परमपुरुषार्थसाधकत्वं सारं सर्व्वोत्कृष्टं संसारमध्ये इदमेव सारमित्यर्थः। परमावलम्बनमिति संसारगर्त्ते पतितानां इदमेवोद्धरणसाधनं, श्वेतातपत्रमिति यत्तु श्वेतच्छत्रं एकस्य राज्ञ एव कदाचित् तापं हरति श्रीकृष्णचरणारविन्दं श्वेतच्छत्रन्तु पुनः उपाश्रितानां सर्व्वेषां सर्व्वाणि पापानि हरति। परमपूज्यत्वञ्च प्रतिपादयति, अतः प्रसिद्धात् श्वेतातपत्रादपि उत्कृष्टत्वं दर्शितमिति भावः—।

षष्ठे चतुर्थे हंसगुह्यस्तुतौ [illegible] सकामाः गणेशादीन् प्रार्थयन्ते त्वन्तु तान् [illegible] किमिति भगवन्तमेव प्रार्थयसे तत्राह—

† भक्तिरत्नावल्यामपि ७।३ दृश्यते। ** एतत्पदमादर्शे नास्ति। १। स्वामिटीकैवोद्धृता। २। [illegible] पाठः। ३। स्तोमा इति मुद्रित स्वामिटीका। ४। स्वामिटीकैव। ५। कुचकुङ्कुमाङ्कितमिति [illegible] पाठः। ६। [illegible] भोपरस्वामितः शब्दगत स्वल्पीयान् भेदः परिलक्ष्यते।

यः प्राकृतै र्ज्ञानपथै र्नाना
यथाशयं देहगतो विभाति ।
यथानिलः पार्थिवमाश्रितो गुणं
स ईश्वरो मे कुरुताम् मनोरथम् ॥४०

भाः ६।४।३४

प्राकृतैरर्व्वाचीनै र्ज्ञानपथै उपासनामार्गैः यथाशयं तद्वासनानुसारेण यो देहगतो अन्तर्य्यामी तत्तद्देवतारूपेण विविधो भाति यथा वायुः पार्थिवं परागः तद्गुद्भवं चम्पकादिगन्धभेदमाश्रित्य नानागन्धवान् विभाति रेणोरुद्गतं धूसरत्वादिकमाश्रित्य नानारूपवान् प्रतीयते तद्वत्। तस्यैव तत्तद्देवतारूपेण फलदातृत्वात्। स ईश्वरएव मे मनोरथं (१) सत्यं करोतु किमन्तर्गड्डुभिर्देवतान्तरैरित्यर्थः। इत्यादि वचन श्रवणात् परमोपास्य— परमभजनीय—देवता—श्रीकृष्ण एवात्स्तदेकशरणतया तच्चरणोपासनेनैव परमगतिर्नान्यथेति निर्णीतम्।

इति भक्तिरत्नाकरे पञ्चमं माहात्म्यम्।

---

## षष्ठ माहात्म्यम्

अथेदानीं परमदेवता श्रीकृष्ण गुण-कर्म्मनाम्नां श्रवणमाहात्म्यमाह—दशमस्कन्धे प्रथमाध्याये परीक्षिद्-वाक्यम्। श्रवणप्रकारमाह—

वीर्य्याणि तस्याखिलदेहभाजा-
मन्तर्ब्बहिः पुरुषकालरूपैः।
प्रयच्छयो मृत्युमुतामृतञ्च
माया मनुष्यस्य वदस्व विद्वन् ॥४१

भाः १०।२।७

अखिल देहभाजां सर्व्वप्राणीनाम् अन्तश्च वहिश्च पुरुषरूपेण कालरूपैश्च अंशापेक्षया वहुवचनम्। मृत्युं सारम् (२) उतापि अमृतमपि प्रयच्छतो वीर्य्याणि वदस्व ब्रुहि। अयन्भावः—अन्तर्य्यामिरूपेणान्तर्दृष्टीनां मुक्तिं यच्छति वहिर्दृष्टीनांच कालरूपेणमृत्युं ददाति यतः अतो अन्तर्दृष्ट्या तद्वीर्य्याण्येव श्रोतव्याणीति (३)।

प्रथमस्कन्धे द्वितीयाध्याये शौनकं प्रति सूतवाक्यम्। हरिकथाश्रवणस्य फलमाह—

शृण्वतां स्वकथां (४) कृष्णः पुण्यश्रवणकीर्त्तनः।
हृद्यन्तस्थो ह्यभद्रानि विधूणोति सुहृद्सताम् ॥४२ *

भाः १।२।१७

ततश्च शृण्वतामपि पुण्ये श्रवणकीर्त्तने यस्य सः सतां सुहृद्धितकारी हृदि यानि अभद्राणि कामादिवासनाः तानि अन्तःस्थो हृदिस्थः सन्। ततः किम्?

नष्टप्रायेष्वभद्रेषु नित्यं भागवत सेवया।
भगवत्युत्तम श्लोके भक्तिर्भवति नैष्ठिकी ॥४३

भाः १।२।१८

ततश्च नष्टप्रायेष्विति सर्व्वाभद्रनाशस्य ज्ञानोदयकालत्वात् (५) प्रायग्रहणं। भागवतानां भक्तानां भागवतशास्त्रस्य वा सेवया नैष्ठिकी निश्चला विक्षेपकताभावात् (६)। ततः किम्?

---

१। श्रीधरटीकैवोक्ता। २। सरखामिति कचित पुस्तके। ३। श्रीधरटीकैवोक्ता। ४। "स्वकथा" इति मुद्रित भागवते। ५। ज्ञानोत्तरेति मुद्रित स्वामिटीका। ६। विक्षेपकाभावादिति मुद्रित स्वामिटीका।

तदा रजस्तमोभावाः कामलोभादयश्च ये ।
चेत एतैरनाविद्धं स्थितं सत्त्वे प्रसीदति ॥४४

भाः १।२।१९

रजस्तमोभावाः कामादयः एतैरनाविद्धम् अनभिभूतं प्रसीदति उपशाम्यति ।

एवं प्रसन्नमनसो भगवद्भक्तियोगतः ।
भगवत्तत्त्वविज्ञानं मुक्तसङ्गस्य जायते ॥४५

भाः १।२।२०

भगवद्भक्तियोगतः प्रसन्नमनसः—अतएव मुक्तसङ्गस्य भगवत्तत्त्वविज्ञानं जायते (१) ।

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्व्वसंशयाः ।
क्षीयन्ते चास्य कर्म्माणि दृष्ट एवात्मनीश्वरे ॥४६

भाः १।२।२१

ज्ञानफलमाह भिद्यते इति । हृदयमेव ग्रन्थिः चिद्ग्रथनरूपः (२) अहङ्कारः अतएव सर्व्वसंशयाः असम्भावनादिरूपाः कर्म्माणि अनारब्धफलानि आत्मस्वरूपभूते ईश्वरे दृष्टे एवकारेण ज्ञानानन्तरमेवेति दर्शयति ।

द्वितीयस्कन्धे अष्टमाध्याये परीक्षितं प्रति शुकवाक्यम् ।

शृण्वतः श्रद्धया नित्यं गृणतश्च स्वचेष्टितम् ।
कालेन नातिदीर्घेण भगवान् विशते हृदि ॥४७

भाः २।८।४

सोऽपि श्रद्धया शृण्वतो नावश्यक (३) इत्याह—शृण्वत इति— । स्वयत्नं विना भगवान् स्वयमेव हृदि विशति । किञ्च—

प्रविष्टः कर्णरन्ध्रेण स्वानां भावसरोरुहम् ।
धुनोति शमलं कृष्णः सलिलस्य यथा शरत् ॥४८

भाः २।८।५

भावसरोरुहं हृदयकमलं प्रविष्टः तद्गतं सर्व्वमलं पापं धुनोति । सलिलस्येति द्रव्यान्तरव्यामिश्राविना कुम्भस्थे जले शोधिते तदेव केवलं शुध्यति, न तु नदीतड़ागादिगतं सर्व्वमलं । स मलः कुम्भस्यान्ते, न तु सर्व्वथा विलीयते । अतएव किञ्चित् चालने पुनः क्षुभ्यति । एवं तपोदानादिप्रायश्चित्तं न सर्व्वथा सर्व्वेषां सर्व्वं पापं धुनोति, किन्तु सावशेषं तच्च कस्यचिदेव * । हृदि प्रविष्टमात्रस्तु श्रीकृष्णः सर्व्वेषां सर्व्वपापं निःशेषं हरतीत्यनेन दृष्टान्तेनोक्तम् सलिलस्य मलं यथा शरदिति । ततश्च कृतार्थो भवतीत्याह—

धौतात्मा पुरुषः कृष्णपादमूलं न मुञ्चति ।
मुक्तसर्व्वपरिक्लेशः पान्थः स्वशरणं यथा ॥४९

भाः २।८।६

धौतात्मा निष्पापः मुक्ताः सर्व्वे परिक्लेशाः रागादयो येन सः पान्थः प्रवासादागतः स्वशरणं गृहं यथा न मुञ्चति तद्वत् । किञ्च वृथैव क्षीयमाणमायुर्हरिकथया सफलं कुर्व्वित्याशयेनाह—

आयुर्हरति वै पुंसामुद्यन्नस्तं च यन्नसौ ।
तस्यर्त्ते यत्क्षणो नीत उत्तमश्लोकवार्तया ॥५० †

भाः २।३।१७

---

१ । एतत् मुद्रित स्वामिटीकातोऽधिकम् । २ । "चिज्जड़ग्रन्थनरूप" इति मुद्रितस्वामिटीका । ३ । नावश्यक इति आदर्शपुस्तके । * किञ्चिदेवेत्यधिकं मुद्रितस्वामिटीकायाम् । † भक्तिरत्नाकरस्यापि ... [illegible]

असौ सूर्य्यः उद्यन् उद्गच्छन् अस्तमदर्शनञ्च यन् गच्छन् यत् येन क्षणो नीतः तस्य आयुः ऋते सर्व्वंपित्वा वृथैवान्येषामायुर्हरतीति ।

प्रथमस्कन्धे अष्टादशाध्याये सूतवचनम् ।

किं बहुना नरैरेतावदेः कर्त्तव्यमिति सर्व्वशास्त्रसारं कथयति ।

या या कथा भगवतः कथनीयोरुकर्म्मणः ।
गुणकर्म्माश्रया पुंभिः संसेव्यास्ता बुमुक्षुभिः ॥५१
भाः १।२८।१० †

कथनीयानि उरूणि कर्म्माणि यस्य तस्य गुणकर्म्म विषयाः बुमुक्षुभिः सद्भावमिच्छद्भिः (१) ॥

तृतीयस्कन्धे पञ्चमे विदुर वाक्यम्—

वर्णाश्रमधर्म्मादपि कृष्णकथैव श्रवणीयेत्याशयेनाह—

कस्तृप्नुयात्तीर्थपदोऽभिधानात्
सत्रेषु वः सूरिभिरीड्यमानात् ।
यः कर्णनाडीं पुरुषस्य यातो
भवप्रदां गेहरतिं छिनत्ति ॥५१ भाः ३।५।११

तीर्थपदः (२) कृष्णस्य अभिधानात् कथामृतात् सत्रेषु समाजेषु सूरिभिर्नारदादिभिः ।

चतुर्थस्कन्धे ध्रुवंप्रति मनोः स्वायम्भुवस्य वाक्यम् ।
उपदेशसारमाह—

संयच्छ रोषं भद्रं ते प्रतीपं श्रेयसां परम् ।
श्रुतेन भूयसा राजन्नगदेन यथामयम् ॥५३
भाः ४।११।३१

संयच्छ नाशं कुरु श्रेयसां परं प्रतीपं प्रतिकूलं अगदेन औषधेन यथा लोको रोगं नियच्छति ॥

तृतीये नवमाध्याये ब्रह्मणो वाक्यम्

आदरेण तु त्वां भजन्तः कृतार्था इत्याह—
ये तु त्वदीयचरणाम्बुजकोषगन्धं
जिघ्रन्ति कर्णविवरैः श्रुतिवातनीतम् ।
भक्त्या गृहीतचरणः परया च तेषां
नापैषि नाथ ! हृदयाम्बुरुहात् स्वपुंसाम् ॥५४*
भाः ३।९।५

श्रुतिर्वेदः स एव वातः तेनानीतं प्रापितं नापैषि नापयासि ये त्वत्कथाश्रवणमत्यादरेण कुर्व्वन्ति तेषां हृदि नित्यं प्रकाशसे इति भावः ।

चतुर्थस्कन्धे ध्रुवस्तुतिः—

ये कामादर्थं भजन्ति ते मूढमतयः ये निष्कामेनार्च्चयन्ति ते महान्त इत्याह—

या निर्वृतिस्तनुभृतां तव पादपद्म-
ध्यानाद् भवज्जनकथाश्रवणेन वा स्यात् ।
सा ब्रह्मणि स्वमहिमन्यपि नाथ ! माभूत् **
किंत्वन्तकासिलुनितात् पततां विमानात् ॥५५
भाः ४।९।१०

स्वमहिम्नि निजानन्दस्वरूपे सा माभूत् न भवति अन्तकस्य असिना कालेन लुनितात् खण्डितात् विमानात् पततां सा नास्तीति किमु वक्तव्यम् ।

तत्रैव विंशाध्याये पृथुस्तुतौ—'कैवल्यपते' इति सम्बोधनात् कैवल्यं वरिष्यसीत्याशङ्क्याह—

† भक्तिरत्नावल्याम् ५।१० १। सर्व्वत्र स्वामिटीकैवानुसृता। २। तीर्थपदस्येति आदर्शपुस्तके पाठः।

* भक्तिरत्नावल्याम् ४।१८ ** भक्तिरत्नावल्याम् ३।२१

न कामये नाथ तदप्यहं क्वचित्
न यत्र युष्मच्चरणाम्बुजासवः।
महत्तमान्तर्हृदयान्मुखच्युतो
विधत्स्व कर्णायुतमेष मे वरः ॥५६
भाः ४।२०।२४

महत्तमानामन्तर्हृदयान्मुखद्वारेण निर्गतो भवत्पदाम्भोजमकरन्दः यशःश्रवणादिसुखं यत्र नास्ति तादृशं चेत् कैवल्यं तर्हि तत् कदाचिदपि न कामये। तर्हि किं कामयसे? तदाह यशःश्रवणाय कर्णानामयुतं विधत्स्व। ननु कोऽप्येवं न वृतवान् किमप्यन्यत् चिन्तयेत्याह— मम त्वेष एव वरः। ननु तर्हि कैवल्याभावे रागद्वेषाभ्यां कलिलानां भक्तिसुखमपि नं स्यादित्याह—

स उत्तमःश्लोक महन्मुखच्युतो
भवत् पदाम्भोजसुधाकलानिलः।
स्मृतिं पुनर्विस्मृततत्त्ववर्त्मनां
कुयोगिनां नो वितरत्यलं वरैः ॥५७*
भाः ४।१०।२५

भवत्पदाम्भोजसुधायाः कलाः लेशाः तत्सम्बन्धी योऽनिलः स एव दुरादपि किञ्चिद् यशः श्रवणमात्रमित्यर्थः। विस्मृतं तत्त्ववर्त्म यैः कुयोगिभिः तेषामपि आत्मतत्त्वं वितरति, अतः खलु भक्तानां न रागादिसद्भावः। (१)

द्वितीयस्कन्धे द्वितीयाध्याये श्रवणादिफलमभिनन्दयन्नाह—(२)

पिबन्ति ये भगवत आत्मनः सतां
कथामृतं श्रवणपुटेषु सम्भृतम्।
पुनन्ति ते विषयविदूषिताशयं
व्रजन्ति तच्चरणसरोरुहान्तिकम् ॥५८**
भाः २।२।३७

सतामात्मत्वेन प्रकाशमानस्य कथैवामृतं विषयैर्विदुषितं मलिनीकृतं आशयं पुनन्ति शोधयन्ति तस्य चरणपद्मान्तिकं विष्णुपदं व्रजन्ति।

चतुर्थे सप्तमाध्याये सिद्धास्तत्कथामभिनन्दन्तः स्तुवन्ति

अयं त्वत्कथामृष्टपीयुषनद्यां
मनोवारणक्लेशदावाग्निदग्धः।
तृषार्त्तोऽवगाढो न सस्मार दावं
न निष्कामति ब्रह्मसम्पन्नवन्नः ॥५९***
भाः ४।७।३५

अयं नो मनोवारणः गजः तत् कथैवामृष्टं शुद्धं पीयूषं तन्मयी या नदी तस्यामवगाढ़ प्रविष्टः दावाग्नितुल्यं संसारतापं न स्मरन्ति स्म। न ततो निर्गच्छति। ब्रह्मसम्पन्नवत् ब्रह्मैक्यं प्राप्तमिव।

दशमस्कन्धे प्रथमाध्याये परीक्षिद्वाक्यम्—

अत्र लोके त्रिविधाः जनाः सन्ति मुक्ताः मुमुक्षवो विषयिणश्च ; तेषां मध्ये न कस्याप्यलं प्रत्यय इत्याह—

निवृत्त तर्षैरुपगीयमानात्
भवौषधात् श्रोत्रमनोऽभिरामात्।
क उत्तमश्लोक गुणानुवादात्
पुमान् विरज्येत विना पशुघ्नात् ॥६० +
भाः १०।१।४

गततृष्णैः मुक्तैरपीत्यर्थः। मुमुक्षूणामवश्यौषधात्

* भक्तिरत्नावल्याम् ४।२२ १। सर्व्वत्र स्वामिटीकैवानुसृता। २। "श्रवण फलमभिनन्दयन्नाह" इति मुद्रितस्वामिटीकायां पाठः। ** भक्तिरत्नावल्याम् ४।२ *** भक्तिरत्नावल्याम् ४।१९ + भक्तिरत्नावल्याम् ४।१९

इत्याह—भवौषधादिति। विषयिणां परमो विषयोऽयमेवेत्याह श्रोत्रमनोऽभिरामादिति। एवम्भूतायां हरिकथायां यो विमुखः स एव चाण्डालः तस्माद्विना। पशुघातिनो व्याधादिति वा। यद्वा अकारविश्लेषः, अपगता शुग् तस्मात् तमात्मानं हन्तीत्यपशुघ्नः तस्मात्। यद्वा, अपगता शुग् यस्य तं मुनिं हन्तीत्यपशुघ्नः राक्षसः तस्मात्। यद्वा अपगता शुग् यस्मात् तमीश्वरं विष्णुं द्वेष्टीति अपशुघ्नः तस्मात्। अथवा नात्राकारविश्लेषः—। पशुं हन्तीत्यनेनेति पशुघ्नः दण्डलोष्ट्रादिः तद्वद् यो जड़ः तस्माद्विना। अथवा यज्ञपुरुषमनाराध्य स्वर्गाद्यर्थं यः पशून् हन्ति स पशुघ्नः तस्माद्विनेति भावः। भक्तिरत्नावल्यामियं योजना सप्तविधास्ति (१)। किञ्च—

> यत्शृण्वतोऽपैत्यरतिर्वितृष्णा
> सत्त्वञ्च शुद्धत्यचिरेण पुंसः।
> भक्तिर्हरौ तत्पुरुषे च सख्यं
> तदेव हारं वद मन्यसे चेत् ॥६१
>
> भाः १०।७।२

तथापि यत् शृण्वतः पुंसः पुंमात्रस्य अरतिः मनोग्लानिः तन्मूला विविधा तृष्णा चापगच्छति। तथा सत्त्वशुद्धिः हरिभक्तिः हरिदाससख्यानि च भवन्ति तस्य कृष्णस्य पुरुषे वैष्णवे। तदेव हारं हरेश्चरितं मनोहरम्वा वद। मन्यसे यदि अनुग्रहं करोषि (२)।

तत्रैवैकत्रिंशाध्याये गोपीनां वाक्यम्।

किञ्चास्माकं तद्विरहेण प्राप्तमेव मरणं किन्तु तत्कथामृतं पाययद्भिः सुकविभिर्वेञ्चितमित्याहुः

> तव कथामृतं तप्तजीवनं
> कविभिरीड़ितं कल्मषापहम्।
> श्रवणमङ्गलं श्रीमदाततं
> भुवि गृणन्ति ये भूरिदा जनाः ॥६२
>
> भाः १०।३१।९ *

कथैवामृतं तत्र हेतुः तप्तजीवनं प्रसिद्धामृतादुत्कर्षमाहुः कविभिर्ब्रह्मविद्भिः ईड़ितं स्तुतम्। भोग्यं त्वमृतं तैः तुच्छीकृतम्। किञ्च, कल्मषापहं काम्यकर्म्मनिरसनम्। तदमृतं नैवंभूतम्। किञ्च श्रवणमङ्गलं श्रवणमात्रेण मङ्गलप्रदं नानुष्ठानापेक्षम्। किञ्च श्रीमत् सुशान्तं तदुन्मादकम्। एवम्भूतं तत्कथामृतं आततं यथा भवति तथा भुवि ते गृणन्ति निरूपयन्ति ते जना भूरिदाः वहुदातारः। यद्वा, एवम्भूतं तत्कथामृतं भुरि ये गृणन्ति ते भूरिदाः वहुजन्मसु वहुदातारः सुकृतिन् इत्यर्थः। एतदुक्तं भवति ये केवलं कथामृतं गृणन्ति तेऽपि तावदतिधन्याः किं पुनः त्वां गृणन्तीति। (३)

द्वादशस्कन्धे चतुर्थाध्याये कृष्णस्य कथा निःशेषेनाभिधातुं ब्रह्मापि न समर्थ इत्युक्तम्। ननु यदि अन्येनापि अभिधातुं न शक्यते तर्हि किं तदभिधानेन तत्राह—

> संसारसिन्धुमतिदुस्तरमुत्तीतिर्षो-
> र्नान्यः प्लवो भगवतः पुरुषोत्तमस्य।
> लीलाकथारसनिषेवणमन्तरेण
> पुंसो भवेत्त्रिविधदुःखदवार्द्दितस्य ॥६३ **
>
> भाः १२।४।४०

१। श्रीधरस्वामिव्याख्यान कान्तिमाला व्याख्यानं चात्रानुसृतम्। रामचरण ठाकुरेणास्यात्रानुवादो न कृत इति सुधीभिरालोचनीयम्। २। एष तु दशमस्कन्धीय प्रथमस्येति कृत्वानूदितः रामठाकुरेण। व्याख्यानं श्रीधरीयमेव। * भक्तिरत्नावल्यां ४।४०
३। स्वामिटीकैवानुसृता। ** भक्तिरत्नावल्याम् ४।३१

त्रिविधं दुःखमेव दावानलः तेनार्हितस्य पीड़ितस्य अतः तदुत्तीर्लिर्षोः पुंसः भगवतो या लीलाः तासां रसः तन्निषेवणमन्तरेण अन्यः प्लवः उत्तरणसाधनं न भवेत् उपायान्तराभावात्। अतस्तत्कथाश्रवणमेव यथाशक्ति निसेव्यमिति भावः।

चतुर्थे त्रिंशाध्याये भगवन्तं प्रति दशप्रचेतसानां वाक्यम्—। वरं वृनीस्वेत्युक्तं यद्भवता तदुपपादयति। तदङ्घ्रिसेवने सुखलभ्ये सत्यन्याशिसोऽतितुच्छा इत्याशयेनाह—

पारिजातेऽञ्जसा लभ्ये सारङ्गोऽन्यन्नसेवते।
तदङ्घ्रिसेवामासाद्य साक्षात् किं किं वृणीमहि॥६४
भाः ४।३०।३२

यथा सारङ्गः भ्रमरः पारिजाते सुखेन लभ्ये अतिसुलभमप्यन्यत् वृक्षान्तरं न सेवते तथा वयमपि साक्षात् तदङ्घ्रिमूलं प्राप्य किं किं वृणीमहि न किञ्चिदित्यर्थः। यद्वा किमप्यन्यत् तुच्छं किमर्थं वृनीमहि। यद्वा यदि वृनीमहि तर्हि किं किं वृणीमहि ? अनन्तत्वेन मनोरथानांमनवस्थानदित्यर्थः। अतएतदेव प्रार्थयाम इत्याहुः—

यावत्ते मायया स्पृष्टा भ्रमाम इह कर्म्मभिः।
तावद् भवत् प्रसङ्गानां सङ्गः स्यान्नो भवे भवे॥६५
भाः ४।३०।३३

यावदिति स्पृष्टा व्याप्ताः सन्तो भगवति प्रकृष्टः सङ्गो येषां तेषां सङ्गोऽस्माकं स्यात्। (१)

सत्सङ्गस्य श्रेष्ठ्यं प्रपञ्चयति (१) यत्रेति त्रिभिः—

यत्रेड्यन्ते कथामृष्टास्तृष्णायाः प्रशमो यतः।
निर्व्वैरं यत्र भूतेषु नोद्वेगो यत्र कश्चन॥६६

यत्र नारायणः साक्षाद् भगवान् न्यासिनां गतिः।
प्रस्तूयते सत्कथासु मुक्तसङ्गैः पुनः पुनः॥६७

तेषां विचरतां पद्भ्यां तीर्थानां पावनेच्छया।
भीतस्य किं न रोचेत तावकानां समागमः॥६८ *
भाः ४ ३०।३५—३७

यत्र येषु यतो याभ्यः कथाभ्यः निर्व्वैरं वैरता भावः नृणां पद्भ्यां पावनेच्छया।

तत्रैव विंशे भगवन्तं प्रति पृथुवाक्यम्।

वरैः प्रलोभनञ्च कृपालोस्तवानुचितमित्यथाह।

मन्ये गिरन्ते जगतां प्रमोहिणी
वरं वृणीस्वेति भजन्तमात्थ यत्। †
वचो नु तन्त्या यदि ते जनोऽसितः
कथं पुनः कर्म्म करोति मोहितः॥६९
भाः ४।२०।३०

नु अहो ते वाचा तन्त्या यदि जनोऽबद्धोऽसितोऽबद्धः स्यात् तर्हि पुनः पुण्यफलैर्म्मोहितः सन् कथं कर्म्म करोति ?

तन्मायया खण्डितस्य त्वया पुनः खण्डनं न कर्त्तव्यं किन्तु हितं कर्त्तव्यमित्याह—

तन्माययाद्धा जन ईश खण्डितो
यदन्यदाशास्त ऋतात्मनोऽबुधः।

१। सर्व्वत्र स्वामिटीकैवानुसृता। * एते त्रयः भक्तिरत्नावल्यामपि २।२०—२२। † एषः श्लोकः [illegible] नास्ति। कामस्यानुसन्धान समितिस्वयुक्तकेव्वस्ति।

यथा चरेद्बालहितं पिता स्वयं
तथा त्वमेवार्हसि न समीहितुम् ॥७०
भाः ४।२०।३१

तन्मायया ऋतादात्मनः तत्त्वः खण्डितः पृथक्-कृतः अतोऽन्यत् पुत्रादिकमाशास्ते अतः स्वयमविज्ञापितएव हितं चेष्टितुमर्हसि ।

दशमे नवमाध्याये शुकोक्तेः फलमभिनन्द्य फलितमाह ।

नायं सुखापो भगवान् देहिनां गोपिकासुतः ।
ज्ञानिनां चात्मभूतानां यथाभक्तिमतामिह ॥७२ *
भाः १०।९।२१

देहिनां देहाभिमानिनां तापसादीनां ज्ञानिनां निवृत्ताभिमानानामपीति ।

तृतीयस्कन्धे तत्त्वस्तुतौ—ननु यदि हृदिस्थितमपि-पादाब्जं केषाञ्चिद सुदूरम् अन्येषामपि तथैव स्यादविशेषादित्याशङ्क्याहुः—

तान् वा (१) असद्वृत्तिभिः रक्षिभिर्ये
पराहृतान्तर्मनसः परेश ।
अथो न पश्यन्त्युरुगाय नूनं
ये ते पदन्यास विलासलक्ष्म्याः ॥७३
भाः ३।५।४५

असद्वृत्तिभिर्बहिर्मुखैः अक्षिभिरिन्द्रियैः पराहृतं दूरमपहृतमन्तःस्थं येषां ते, अथ नूनं तान् पश्यन्ति, वै प्रसिद्धं। कुतः पुनः तेषां तत्सङ्गः कान् ते तव पदन्यासः गमनं तस्य विलासो विभ्रमः तस्य लक्ष्मीः शोभा तस्याः ये तान् तल्लीलाकथनादिभिः शोभमानांस्त्वद्भक्तानित्यर्थः। पथ इति लक्ष्म्या इति च पाठे—तत्पदन्यासविलास लक्ष्म्यो येषां तान् पथः तन्मार्गभूतान् सतः। मार्गान् वा श्रवणादीन् न पश्यन्तीत्यर्थः यद्वा, ये एवम्भूताः भागवतास्ते तानुन्मत्तान् न पश्यन्तीत्यन्वयः सत्सङ्गाभावेन हरि-कथाश्रवणाभावात् हृदिस्थितमपि तेषां सुदूरमिति-भावः ।†

एतदेवस्फुटयति—केवलेन हरिकथा श्रवणेनैव सुखेन तल्लोकप्राप्तिरिति द्वाभ्याम्—

पानेन ते देव कथासुधायाः
प्रवृद्धभक्त्या विशदाशया ये ।
वैराग्यसारं प्रतिलभ्य बोधं
यथाञ्जसान्वीयुरकुण्ठधिष्ण्यम् ॥७४ *
भाः ३।५।४६

वैराग्यमेव सारं बलं यस्य बोधस्य तं लब्ध्वा अन्वीयुः प्राप्नुयुः अकुण्ठधिष्ण्यं वैकुण्ठलोकम् ।

तथा परे चात्मसमाधियोग
बलेन जित्वा प्रकृतिं बलिष्ठाम् ।
त्वामेव धीराः पुरुषं विशन्ति
तेषां श्रमः स्यान्नतु सेवया ते ॥७५ *
भाः ३।५।४७

आत्मसमाधिः मनःस्थैर्य्यं स एव योगः उपायः तस्यबलेन ज्ञानयोगतः श्रमेण मोक्षः सत्सङ्गत्वात्, (१) कथाश्रवणादिना त्वनायासेनैव अहम्ममताधिष्ठितानां (२) तु न कथञ्चिदितिभावः ।

---

* भक्तिरत्नावल्याम् २।६३ १। "वैवासदिति" मुद्रित भागवते पाठः। † सर्व्वत्र स्वामिटीकैव गृहीता। १। 'सत्सङ्गत्वस्त्वयेति" आदर्श पुस्तके पाठः। २। अहमम्मताविष्टानामिति मुद्रितस्वामिटीकायां पाठः। * भक्तिरत्नावल्यामपि धृतौ ४।१७—२।६४

ननु विषयाकृष्टचित्तानां कुतः तदन्वेषणं तत्राहुः

> यत् श्रद्धया श्रुतवत्या च भक्त्या
> संमृज्यमाने हृदयेऽवधाय ।
> ज्ञानेन वैराग्यबलेन धीराः
> व्रजेम तत्तेऽङ्घ्रिसरोजपीठम् ॥७६

भाः ३।५।४२

यत् हृदये अवधाय ध्यात्वा वैराग्यं बलं यस्य तेन ज्ञानेन धीरा भवन्ति। सरागे (१) चित्ते ध्यानमेव कुतः? तत्राहुः—श्रद्धया श्रवणपूर्ब्बिकया-भक्त्या च संमृज्यमाने संशोध्यमाने । †

चतुर्थस्कन्धे द्वाविंशे पृथुं प्रति सनकादिवाक्यम् ।

तदेव सङ्गमं प्रश्नञ्चाभिनन्द्य अनुवादमुखेनैव मोक्षसाधन-मुपदिशति ।

> अस्त्येव राजन् भवतो मधुद्विषः
> पादारविन्दस्य गुणानुवादने ।
> रतिः सदा या विधुनोति नैष्ठिकी
> कामं कषायं मलमन्तरात्मनः ॥७७

भाः ४।२२।२०

गुणानामनुवादने (१) प्रवर्त्तने श्रवणे इत्यर्थः। अन्तरात्मनो मनसोऽन्तस्थं कामात्मकं मलं विधुनोति। कषायं धातुरागवदनिवर्त्त्यम् । †

चित्तशुद्धौ च बहिर्वैराग्यम् आत्मरतिश्च भवति न च ततोऽधिकं साधनमस्ति, शास्त्रेषु तयोरेव मोक्षहेतुत्व-निश्चयादित्याह—

> शास्त्रेष्वियानेव सुनिश्चितो नृणाम्
> क्षेमस्य सध्र्यग् विमृशेषु हेतुः ।
> असङ्ग आत्मव्यतिरिक्त आत्मनि
> दृढा रतिर्ब्रह्मणि निर्गुणे च या ॥७८

भाः ४।२२।२१

सध्र्यग् विमृशेषु सम्यग् विचारवत्सु शास्त्रेषु क्षेमस्य हेतुः एतावानेव सुनिश्चितः। कोऽसौ? आत्मव्यतिरिक्ते देहादौ असङ्गो वैराग्यं, आत्मनि च दृढा रतिः प्रीतिः आत्मनो विशेषणं निर्गुणे ब्रह्मनीति । †

नन्वेतावदेवाति (१) दुर्लभमित्याशङ्क्य उत्तमाधि-कारिणः श्रवणमात्रेण भवति अन्यस्य तु चित्तशुद्ध्यनुसारेण साधनतारतम्येन (२) वर्द्धमानया भक्त्येत्यभिप्रेत्याह चतुर्भिः ।

> सा श्रद्धया भगवद्धर्म्मचर्य्यया
> जिज्ञासयाध्यात्मिक योगनिष्ठया ।
> योगेश्वरोपासनया च नित्यम्
> पुण्यश्रवः कथया पुण्यया च ॥७९

भाः ४।२२।२२

सा ब्रह्मणि रतिः असङ्गश्च श्रद्धादिभिः स्यादिति चतुर्थेनान्वयः। जिज्ञासया तत्तद् विशेषबुभुत्सया, पुण्यं श्रवो यस्य तस्य हरेः पुण्यया कथया च ।

> अर्थेन्द्रियाराम सगोष्ठ्यतृष्णया
> तत् सम्मतानामपरिग्रहेण च ।

१। "ननु सरागे" इति मुद्रित स्वामिटीका पाठः। २। गुणानामनुवादने प्रवर्त्तनेयानुवादप्रवर्त्तन इति मुद्रित स्वामिटीका। † स्वामिटीकैव गृहीता। १। "एतावदेवतावदिति" इति मुद्रित स्वामिटीकायाम्। २। "तारतम्यात्" इति मुद्रित स्वामिटीकायाम्।

विविक्तरुच्या परितोष आत्मनि
विना हरेर्गुणपीयुष पानात् ॥८०

भाः ४।२२।२३

अर्थारामाः अर्थनिष्ठाः तामसाः इन्द्रियारामाः कामनिष्ठाः राजसाः तैः सह या गोष्ठी तस्यामतृष्णया तेषां ग्रहणाय ये सम्मताः अर्थाः कामाश्च तेषामपरिग्रहेण विविक्ते विजने या रुचिस्तया। आत्मन्येव परितोषे च सति स्यात् किन्तु हरेर्गुण पियूष पानाद्विना तस्मिन् सति विविक्ते रुचिर्न कार्य्या न चात्मनि परितोषः कार्य्य इत्यर्थः। †

अहिंसया पारमहंसचर्य्यया
स्मृत्या मुकुन्दाचरिताग्र्यसीधुना।
यमै रकामै र्नियमैरनिन्दया
निरीहया द्वन्द्वतितिक्षया च ॥८१

भाः ४।२२।२४

पारमहंसचर्य्यया उपशमादिप्रधानया वृत्त्या स्मृत्या आत्महितानुसन्धानेन मुकुन्दाचरितमेवाग्र्यं सीधु श्रेष्ठममृतम् तच्चरितस्मृतिसुखेनेत्यर्थः मार्गान्तरस्यानिन्दया निरीहया योगक्षेमार्थ क्रियाराहित्येन, शीतोष्णादिद्वन्द्वसहनेन च। †

कथयेत्यत्र उक्तमपि कथनं भक्तेरङ्गत्वेन पुनरुच्यते—

हरेर्मुहुस्तत्परकर्णपूर-
गुणाभिधानेन विजृम्भमानया।
भक्त्या ह्यसङ्गः सदसत्यनात्मनि
स्यान्निर्गुणे ब्रह्मणि चाञ्जसा रतिः ॥८२

भाः ४।२२।२५

तत्पराः हरिभक्तास्तेषां कर्णपूराः कर्णालङ्कारभूताः ये हरेर्गुणाः तेषामभिधानेन सदसति कार्य्य-कारणरूपे। भगवदन्यत्रासङ्ग आत्मरतिश्च। † इत्यनेन निदर्शनेन एकशरणतयाभिमुखेन भगवत् कथाश्रवणेन संसारान्मोक्षो भवतीति निर्णीतम् ॥

इति भक्तिरत्नाकरे षष्ठ माहात्म्यम् ॥

# सप्तममाहात्म्यम्

अथ हरिनामकीर्तनमाहात्म्यम् कथयति। प्रथमस्कन्धे प्रथमाध्याये शौनकादिवाक्यम्—

तत्प्रभावमनुवर्णयन्तः तद्यशःश्रवणोत्सुक्यमाविष्कुर्व्वन्तीत्याह।

आपन्नः संसृतिं घोरां यन्नामविवशोगृणन्
ततः सद्यो विमुच्येत यद्बिभेति स्वयं भयम् ॥ १ *

भाः १।१।१४

संसृतिमापन्नः प्राप्तः विवशोऽपि ततः संसृतेः। अत्र हेतुः यद् यतो नाम्नः भयमपि स्वयं बिभेति। †

द्वितीयस्कन्धे प्रथमाध्याये शुकवाक्यम्—

साधकानां सिद्धानाञ्चातः परमन्यत्श्रेयो नास्तीत्याह।

एतन्निर्व्विद्यमानानामिच्छतामकुतो भयम्।
योगिनां नृप निर्णीतं हरेर्णामानुकीर्त्तनम् ॥२*

भाः २।१।११

† सर्व्वत्र स्वामिटीकैव अनुसृता। * भक्तिरत्नावल्यामपि धृताः श्लोकाः ५।४+५।१०

इच्छतां कामिनां तत्तत्फलसाधनमेतदेव। निर्व्विद्यमानानां मुमुक्षूणां मोक्षसाधनमेतदेव। योगिनां ज्ञानिनां फलञ्चैतदेव निर्णीतं नात्र प्रमाणं वक्तव्यमित्यर्थः। †

तृतीये नवमे ब्रह्मणो वाक्यम्।

नामग्रहणमात्रतः कैवल्यप्रदत्वेन ऐश्वर्य्यं व्यञ्जयन् नमस्करोति।

यस्यावतारगुणकर्म्मविड़म्बनानि
नामानि येऽसुविगमे विवशा गृणन्ति।
तेऽनेक-जन्म-शमलं सहसैव हित्वा
संयान्त्यपावृतमृतं तमजं प्रपद्ये ॥३ *

भाः ३।९।१५

अवतारादीनां विड़म्बनमनुकरणं येषु तान्यवतारविड़म्बनानि 'दैवकीनन्दन' इत्यादीनि गुणविड़म्बनानि सर्व्वज्ञो भक्तवत्सल इत्यादीनि कर्म्मविड़म्बनानि गोवर्द्धनोद्धरणः कंसारीत्यादीनि नामानि ये असुविगमेऽपि विवशा अपि गृणन्ति केवलमुच्चारयन्ति ते अनेकजन्मशमलं पापं सहसैव हित्वा तत्क्षणादेव त्यक्त्वा अपावृतं निरस्तावरणम् ऋतं ब्रह्म यान्ति प्राप्नुवन्ति तम् अजं श्रीकृष्णं प्रपद्ये प्रणामं करोमीत्यर्थः।

तत्रैव त्रयस्त्रिंशे देवहूतिवाक्यम्। अतस्तद्दर्शनादहं कृतार्थोऽस्मीति कैमुतिकन्यायेनाह।

यन्नामधेयश्रवणानुकीर्त्तनाद्
यत् प्रह्वणाद् यत् स्मरणादपि क्वचित्।
श्वादोऽपि सद्यः सवनाय कल्पते
कुतः पुनस्ते भगवन्नु दर्शनात् ॥४

भाः ३।३३।६

यस्य नामधेयस्य श्रवणमनुकीर्त्तनञ्च तस्मात् क्वचित् कदाचिदपि श्वानमत्तीति श्वादः श्वपचः सोऽपि सवनाय सोमपानाय कल्पते योग्यो भवति, अनेन पूज्यत्वं लक्ष्यते॥ †

तत्रैव तदुपपादयति—

अहो वत श्वपचोऽतो गरीयान्
यज्जिह्वाग्रे वर्त्तते नाम तुभ्यम्।
तेपुस्तपस्ते जुहुवुः सस्नुरार्य्या
ब्रह्मानूचुर्नाम गृणन्ति ये ते ॥५

भाः ३।३३।७

अहो वतेति अत्याश्चर्य्ये। यस्य जिह्वाग्रे तव नाम वर्त्तते सः श्वपचोऽपि अतोऽस्मादेव हेतोर्गरीयान्; यद्यस्माद् वर्त्तते अत इति वा। कुत इत्यत आह त एव तपस्तेपुः कृतवन्तः, जुहुवुः होमं कृतवन्तः, सस्नुः तीर्थेषु स्नाताः, आर्य्याः त एव सदाचाराः, ब्रह्म वेदमनूचुः अधीतवन्तः, त्वन्नामकीर्त्तने तप आद्यन्तर्भूतत्वात्, (१) अतः पूज्यतमास्ते (२) इत्यर्थः। यद्वा जन्मान्तरे दैवतपोहोमादिकं सर्व्वं कृतमिति त्वन्नामकीर्त्तनेन माहात्म्योदयोऽवगम्यते (३) इत्यर्थः। †

† सर्व्वत्र स्वामिटीकैव गृहीता। * भक्तिरत्नावल्यामपि धृतः ५।१२। १। अन्तर्भूतत्वमिति मुद्रित स्वामिटीकायां पाठः। २। पूज्यतमा इति स्वामिटीका। ३। "तन्नाम कीर्त्तनमहामाहात्म्यादेवावगम्यत" इति स्वामिटीका।

पञ्चमे पञ्चविंशे ब्रह्मणः सभायां नारदोऽनन्तं स्तौति। आस्तां तावत् कृपया वपुर्द्धारणं तद्भजनं वा तन्नामौदार्य्यमेवातिचित्रमेवेत्याह।

यन्नामश्रुतमनुकीर्त्तयेदकस्मा-
दार्त्तो वा यदि पतितः प्रलम्भनाद्वा।
हन्त्यंहः सपदि नृणामशेषमन्यं
कं शेषाद् भगवत उपाश्रयेन्मुमुक्षुः ॥६

भाः ५।२५।११

यस्य नाम यदि पतितो महापातक्यपि अनुकीर्त्तयेत् तर्हि स शुध्येदिति किमु वक्तव्यम्, यतो असावेव नृणाम् अशेषमंहः सद्यो हन्ति, कथमनु कीर्त्तयेत्? अन्यतः श्रुतं वा अकस्माद् वा आर्त्तो वा सन् प्रलम्भनाद् वा परिहासात् तस्मात् शेषादन्यं कम् उपाश्रयेत्? †

तत्रैव प्रथमे—

नैवंविधः पुरुषकार उरुक्रमस्य
पुंसां तदङ्घ्रिरजसा जितषड्गुणानाम्।
चित्रं विदूरविगतः सकृदाददीत
यन्नामधेयमधुना स जहाति बन्धम् ॥७

भाः ५।१।३५

जिताः षड्गुणाः इन्द्रियाणि उर्म्मयो (१) यैः तेषामेवम्विधः पुरुषकार इति न चित्रम् नासम्भावितम्। विदूरविगतोऽपि अन्त्यजोऽपि यस्य उरुक्रमस्य नाम सकृदुच्चारयेत् यः सोऽधुना बन्धं संसारं तरतीति। तन्वमिति पाठेऽप्ययमेवार्थः। पाठान्तरे तत्त्वं चाण्डालत्वं विजहाति पूतो (२) भवति। †

षष्ठे द्वितीये यमदूतान् प्रति विष्णुदूतवाक्यम्। नन्वस्य पापिनो दण्डे किमर्थमाक्रोशः क्रियते तत्राहुः।

अयं हि कृतनिर्व्वेशो जन्मकोट्यंहसामपि।
यद्व्याजहार विवशो नाम स्वस्त्ययनं हरेः ॥८ *

भाः ६।२।७

यद् यस्माद् विवशोऽपि हरेर्नाम व्याजहार उच्चारितवान् न केवलं प्रायश्चित्तमात्रं हरेर्नाम अपितु स्वस्त्ययनं मोक्षसाधनमपि तदुक्तम्—

सकृदुच्चरितं येन हरिरित्यक्षरद्वयम्।
बद्धः परिकरस्तेन मोक्षाय गमनं प्रति ॥

इति स्मृतेः। †

ननु कर्म्म साद्गुण्यकरं हरेर्नाम इति युक्तम्।

यस्य स्मृत्या च नामोक्त्या तपोहोमादिभिस्तथा (३)।
न्यूनं सम्पूर्णतामेति (४) सद्यो वन्दे तमच्युतम् ॥

इत्यादि वचनात् स्वातन्त्र्येण त्वघनिवर्त्तकं हरेर्नाम कथं स्यात्? तत्राहुः—

एतेनैव ह्यघोनोऽस्य कृतं स्यादघनिष्कृतम्।
यदा नारायणायेति जगाद चतुरक्षरम् ॥९

भाः ६।२।८

† स्वामिटीकैवोद्धृता। १। षड्उर्म्मयो वेति मुद्रितस्वामिटीका। २। शुद्धो भवतीति मुद्रितस्वामिटीका। ३। तपोयज्ञक्रियादिषु इति मुद्रितस्वामिटीका। ४। सम्पूर्णतां यातीति मुद्रितस्वामिटीका। * भक्तिरत्नावल्यामपि धृतः ५।१३

अघोनः अघवतः मघवत्शब्दवद्‌रूपम्। यत् आ इति च्छेदः। आ ईषत् आभासमात्रं चतुरक्षरं यन्नाम जगाद, एतेनैव केवलेन चतुरक्षरमित्यनेन आधिक्यञ्च दर्शितम्। कथं जगाद? नारायण आय आगच्छ इत्येवं विक्रोशमात्रेण पुत्राह्वानेन। अयं भावः कर्म्माङ्गत्वेऽपि हरिनाम्नः खादिरत्वादिवत् संयोग-पृथकत्वेन सर्व्वप्रायश्चित्तार्थत्वं युक्तमेव। तथाहि—

अवशेनापि यन्नाम्नि कीर्त्तिते सर्व्वपातकैः।
पुमान् विमुच्येत सद्यः सिंहत्रस्तैर्मृगैरिव॥

इत्यादिभिः पुराणे (१) सहस्रशः नाम्नः स्वातन्त्र्यमवगम्यते। न चैतेऽर्थवादा इति शङ्कनीयम् विधिशेषत्वाभावात्। न च विध्यश्रवणादन्यशेषता कल्पनीया "यदाग्नेयोऽष्टाकपालो भवती" त्यादिवत् अप्राप्तार्थत्वेन विधिकल्पनोपपत्तेः। मन्त्रेषु च (२) नाम्नः तपोदानादि (३) सर्व्वधर्म्माधिक्यमवगम्यते। उपपादितञ्च देवताधिकारे मन्त्रार्थवादानामपि स्वार्थे प्रामाण्यं तस्मात् श्रीनारायणनामाभासमात्रेणैव सर्व्वाघनिष्कृतं कृतं स्यादिति।

ननु कामकृतानां वहूनां महापातकानां सहस्रशः आवर्त्तितानां द्वादशाब्दादिकोटिभिरप्यनिवर्त्यानां कथमिवमेव प्रायश्चित्तं स्यात् तत्राहुः द्वाभ्याम्। †

स्तेनः सुरापो मित्रध्रुग् ब्रह्महा गुरुतल्पगः।
स्त्रीराजपितृगोहन्ता ये च पातकिनोऽपरे॥१०*

सर्व्वेषामप्यघवतामिदमेव सुनिष्कृतम्।
नामव्याहरणं विष्णोर्यतस्तद्विषया मतिः॥११*

भाः ६।२।९-१०

सुनिष्कृतं श्रेष्ठं प्रायश्चित्तम् इदमेव। तत्र हेतुः यतो नामव्याहरणात् तद्विषया नामव्याहरकपुरुषविषया मदीयो ममायं सर्व्वतो रक्षणीय इति विष्णोर्मतिर्भवति। †

नन्वस्य पुत्रस्य नामाग्रहीत् न तु भगवन्नाम? तत्राहुः

साङ्केत्यं पारिहास्यं वा स्तोभं हेलनमेव वा।
वैकुण्ठनामग्रहणमशेषाघहरं विदुः॥१२*

भाः ६।२।१४

साङ्केत्यं पुत्रादौ सङ्केतितं पारिहास्यं परिहासेन कृतं स्तोभ गीततास (४) पूरणार्थं कृतं हेलनं किं विष्णुनेति सावज्ञमपि च वैकुण्ठनामग्रहणं नामोच्चारणम्। †

तथापि पापक्षयप्रायश्चित्तमिदमिति ज्ञात्वा नोच्चारितमिति चेत्? तत्राहुः—

अज्ञानादथवा ज्ञानादुत्तमश्लोकनाम यत्।
संकीर्त्तितमघं पुंसां दहेदेधो यथानलः॥१३*

भाः ६।२।१८

वालकेनाज्ञानादपि प्रक्षिप्तोऽग्निर्यथा काष्ठराशिं

१। पुराणे भारते इत्याधिकः आदर्शपुस्तके। २। स्वामिटीकायान्तु "मर्त्या अमर्त्त्यस्य ते भूरिनाम मनामहे विप्रासो जातवेदसः। आस्य जानन्तो नाम चिद्विवक्तन्" इत्यादिषु इति अधिकः ऋक्पाठः (मः ८ सूः ११ ऋः ४) [illegible]। ३। तपोदानादिषु इत्यादर्शे पाठः। † स्वामिटीकैवोद्धृता। ४। गीतालापपूरणार्थे इति मुद्रितस्वामिटीका। * [illegible] धृताः ५।२५+५।२६+५।२०+५।२४

वहति तद्वदित्यर्थः ।

तत्रैव तृतीये दूतान् प्रति यमस्य वाक्यम्

"धर्म्मं भागवतं भटा" इत्युक्तं, तमेव धर्म्ममाह :—

एतावानेव लोकेऽस्मिन् पुंसां धर्म्मः परः स्मृतः ।
भक्तियोगो भगवति तन्नामग्रहणादिभिः ॥१४ †
भाः ६।३।२२

न चात्र प्रमाणं वक्तव्यं दृष्टत्वादित्याह :—

नामोच्चारणमाहात्म्यं हरेः पश्यत पुत्रकाः ।
अजामिलोऽपि येनैव मृत्युपाशादमुच्यत ॥१५ †
भाः ६।३।२३

येनैव केवलेन नामोच्चारणेन ।

ननु सकृदुच्चरितेन नामाभासेन कथं सर्व्वपापक्षयः स्यात्? श्रद्धाभक्त्यावृत्त्यादेरपि विधानात् । तथा हि— सायं प्रातर्गृणन् भक्त्या दुःखग्रामाद्विमुच्यते । "अनुदिनमिदमादरेण शृन्वन्निति" च ।

श्रवणं कीर्त्तनं ध्यानं हरेरद्भुतकर्म्मणः ।
जन्मकर्म्मगुणानाञ्च तदर्थेऽखिलचेष्टितम् ॥

इत्याद्यस्मिन्नेव पुराणे तत्र तत्र पठ्यते; पुराणान्तरे च "पापक्षयश्च भवति स्मरतां तदहर्निशमिति"। अत्रैव च "तस्मात् संकीर्त्तनं विष्णोर्जगन्मङ्गलमंहसाम् । महतामपि कौरव्य विद्ध्यैकान्तिकनिष्कृतम् ॥" इत्यादिना सम्यक् कीर्त्तनादेव मुच्यते । किञ्च—तथा सति किमिति मन्वादयो द्वादशाब्दादीनि स्मरेयुः? तस्मादिदमनुपपन्नमिति । तत्राह *—

एतावतालमघनिर्हरणाय पुंसां
संकीर्त्तनं भगवतो गुण-कर्म्म-नाम्नाम् ।
विक्रुश्य पुत्रमघवान् यदजामिलोऽपि
नारायणेति म्रियमाण इयाय मुक्तिम् ॥ १६ †
भाः ६।३।२४

भगवतो गुणानां कर्म्मणां नाम्नां च सम्यक् (१) संकीर्त्तनमिति यत् एतावता पुंसामघनिर्हरणाय पापक्षयमात्राय अलम् उपयोगो नास्ति । अलंशब्दोऽत्र वारणे । उपयोगाभावमेवाह—अजायामपि मिलतीति अजामिलो महापातक्यपि नारायणेति विक्रुश्य न तु सम्यक्कीर्तयित्वा, तच्च पुत्रं विक्रुश्य न तु हरिम् अघवान् अशुद्धोऽपि म्रियमाण अस्वस्थचित्तोऽपि मुक्तिमवाप; नत्वघनिर्हरणमात्रमतो नामाभासेनापि पापक्षय इत्येव तत्वं भक्तिश्रद्धावृत्यादिविधयस्तु पापवासनाक्षयार्थमित्युक्तमेव (२) गुणानुवादः खलु सत्त्वभावन" इत्यनेनात्रैव ।

ननु तर्हि मन्वाद्युक्तं द्वादशाब्दादि प्रायश्चित्तस्मरणं व्यर्थमित्यत्राह—

प्रायेण वेद तदिदं न महाजनोऽयं
देव्या विमोहितमतिर्वत ! माययालम् ।
त्रय्यां जडीकृतमतिर्मधुपुष्पितायां
वैतानिके महति कर्म्मणि युज्यमानः ॥१७ †
भाः ६।३।२५

अयं महाजनो मन्वादिः; अयं भावः—यथा मृतसञ्जीवन्यौषधमजानन्तो वैद्या रोगनिर्हरणाय त्रिकटुकनिम्बादीनि स्मरन्ति तथा स्वयम्भु-शम्भु-प्रमुखद्वादशव्यतिरेकेनायं महाजनो गुह्यमिदं हरेर्नाममाहात्म्यं ज्ञात्वा द्वादशाब्दादिकं स्मरति ।

* श्रीधरस्वामिटीकैव सर्व्वत्रानुसृता । † भक्तिरत्नावल्यां धृतः १।४५+५।२९+५।३०+५।३१

१। सम्यक् कीर्त्तनमिति मुद्रितस्वामिटोकायाम् । २। वासनाक्षयार्था इति स्वामिटीकापाठः ।

किञ्च, मायया देव्या अलं मोहितमतिरयं महाजनः। मधु मधुरं यथा भवत्येवं पुष्पितायां पुष्पस्थानीयैरर्थवादैरक्षय्यं ह वै चातुर्म्मास्ययाजिनः सुकृतं भवतीत्यादिभिर्मनोहरायां त्रय्यां जड़ीकृता अभिनिविष्टा मतिर्य्यस्य अतो महत्येव कर्म्मणि ज्योतिष्टोमादौ श्रद्धया युज्यमानो नाल्पे प्रवर्त्तते। दृश्यते हि प्राकृतस्य लोकस्य महति मन्त्रादौ अस्पष्टे कठिनाक्षरे श्रद्धा, अल्पे च कोमलाक्षरे रामकृष्णेति स्पष्टनामाक्षरे अश्रद्धा तस्मादस्य ग्राहको नास्तीति तेनोक्तम्। यद्वा, स्वाधीनः सिंहोऽस्तीत्येतावता श्व-शृगालादिनिवारणाय तं यथा न प्रयुञ्जते तथापि तुच्छत्वात् पापस्य तन्निरसनाय परममङ्गलं हरेर्नाम न स्मरन्ति। यद्वा, नाममाहात्म्यज्ञाने सति सर्व्वमुक्तिप्रसङ्गात् संसारोच्छेदः स्यादित्येषा दिक्। ग्रन्थविस्तरभयान्नाति प्रपञ्च्यते। वयन्तु ब्रूमः—वेदार्थविचारकैर्मन्वादिभिर्वैदार्थो भगवन्नाम महिमा ज्ञायत (१) एव वहुषु स्थानेषु निवद्धश्च, तथापि द्वादशाब्दादीनां नाप्रामाण्यम्। यथा हि—यागादिकमुक्तवाऽशेषकर्म्मोपमर्द्दनेनाद्वैतमुक्तम् वेदे, तथा श्रीहरिनामापि प्रायश्चित्तेषु। एवञ्चाद्वैतश्रद्धालुभिर्यागादिष्वकृतेष्वपि न तद्वेदाप्रामाण्यम् अविरुद्ध विषयत्वात् कर्म्मबोधकश्रुतीनां तथा नामोच्चारण महिमाश्रद्धालुभिः प्रायश्चितान्तरेष्वकृतेष्वपि न प्रायश्चित्तविधायकवेदाप्रामाण्यं नाममहिमाशविषयत्वात् तत् श्रुतीनाम् सुकरत्वाच्च (२) नामोच्चारणादीनामद्वैतपक्षतुल्यत्वादिति तदुक्तं प्रायेणेति। एवं श्रवणादिष्वपि द्रष्टव्यम्। *

तस्मात् संकीर्त्तनं विष्णोर्जगन्मङ्गलमंहसाम्।
महतामपि कौरव्य विद्ध्यैकान्तिकनिष्कृतम् ॥१८

भाः ६।३।३१

तस्मादिति शुकोक्तिः। अगतोऽपि मङ्गलरूपम्। तत्रैव द्वितीयाध्याये उपसंहरति द्वाभ्याम्:—

एवं स विप्लावित-सर्व्व-धर्म्मा
दास्याः पतिः पतितो गर्ह्यकर्म्मणा।
निपत्यमानो निरये हतव्रतः
सद्यो विमुक्तो भगवन्नाम गृह्णन् ॥१९ *

भाः ६।२।३८

विप्लाविताः सर्व्वे धर्म्मा येन, हतं व्रतं स्वदारनियमादि यस्य। *

नातः परं कर्म्म-निवन्धकृन्तनं
मुमुक्षतां तीर्थपदानुकीर्त्तनात्।
न यत् पुनः कर्म्मसु सज्जते मनो
रजस्तमोभ्यां कलिलं ततोऽन्यथा ॥२० *

कर्म्म निवन्धनस्य पापवन्धनस्य (३) कृन्तनं छेदकमतः परं नास्ति। कस्मात् परं तदाह—तीर्थपदानुकीर्त्तनात्। अत्र हेतुः—यद् यतोऽनु कीर्त्तनात् अन्यथा प्रायश्चित्तान्तरे रजस्तमोभ्यां कलिलं मलिनमेव तिष्ठति यन्मनः।

म्रियमाणो हरेर्नाम गृणन् पुत्रोपचारितम्।
अजामिलोऽप्यगाद्धाम किमुत श्रद्धया गृणन् ॥२१ *

भाः ६।२।४१

म्रियमाणोऽवशत्वेन श्रद्धाहीनोऽपि। तत्रैव अयोदशे—

ब्रह्महा पितृहा गोघ्नो मातृहाचार्य्यघातवान्।
श्वादः पुल्कशको वापि शुद्ध्येरन् यस्य कीर्त्तनात् ॥२२

भाः ६।१३।८ *

---

१। ज्ञात इति कान्तिमालायां पाठः। २। सुकरत्वादसम्भावनादीनामद्वैतेति कान्तिमालायां पाठः। * एतत् श्लोक-व्याख्यायां श्रीधरटीकातोऽधिकं कान्तिमालातो गृहीतम्। + स्वामिटीकैवोद्धृता। ‡ भक्तिरसामृतसिन्धावपि धृतः १।२।६ + १।२।७ + १।२।८ + १।२।६ ३। पापमूलस्य इति श्रीधरटीकायां कान्तिमालायाञ्च पाठान्तरम्।

दशमे चतुर्स्त्रिंशे भगवन्तं प्रति सुदर्शनवाक्यम्—

मन्नाम गृह्णनखिलान् श्रोतॄणात्मानमेव च।
सद्यः पुणाति किं भूयः तस्य स्पृष्टः पदा हि ते ॥२३

भाः १०।३४।१७

तस्य श्रीकृष्णस्य नाम गृह्णन् अखिलान् श्रोतॄण्-आत्मानञ्च सद्यः पुणाति तस्य पादेन स्पृष्टः सन् पुणातीति—किमु वक्तव्यम्।

तत्रैव सप्तचत्वारिंशे गोप-गोपीनां वाक्यम्:—

मनसो वृत्तयो नः स्युः कृष्णा पादाम्बुजाश्रयाः।
वाचोऽभिधायिनीर्नाम्नां कायस्तत्प्रह्वणादिषु ॥२४

भाः १०।४७।६६

नोऽस्माकं मनसो वृत्तयः श्रीकृष्णस्य पदाम्बुजाश्रयाः स्युः। अभिधायिनीः अभिधायिन्यः। †

तत्रैव नवत्यध्याये:—तस्मात् सर्व्वतीर्थोत्तमत्वं श्रीकृष्णकीर्त्तेः श्रीकृष्णस्यैव सर्व्वदेवतोत्तमत्वं न चित्र-मित्याह:—

तीर्थं चक्रे नृपोनं यदजनि यदुषुस्वः सरित् पादशौचम्
विद्विट् स्निग्धाः स्वरूपं ययुरजितपरा श्रीर्यदर्थेऽन्ययत्नः।
यन्नामामङ्गलघ्नं श्रुतमथ गदितं यत्कृतो गोत्रधर्म्मः
कृष्णस्यैतन्न चित्रं क्षितिभारहरणं कालचक्रायुधस्य ॥२५

भाः १०।९०।४७

इतः पूर्व्वं स्वः सरिदेव सर्व्वतोऽधिकं तीर्थमेवासीत्। इदानीं तु यदुषु यदजनि जातं तीर्थं श्रीकृष्णकीर्त्तिरूवं एतत् स्वः सरिद्रूपः पादशौचतीर्थलक्षणमल्पं चक्रे स्वयमेव सर्व्वतीर्थोपरि विराजते इत्यर्थः। श्रीकृष्णस्य विद्विषः स्निग्धाश्च तत्सारूप्यं ययुरित्यत्रापि न चित्रं तस्य परम-कारुणिकत्वात्। तथा इदञ्च न चित्रम्। किन्तत्? अजितपरा अजिता कैश्चित् अप्राप्ता पराः सर्व्वतः परिपूर्ण श्रीश्च कृष्णस्यैव नान्यस्येति। तदेवाह—यदर्थे अन्येषां ब्रह्मादीनां यत्न इति। तमेव श्रीः भयत इति चित्रमिति चेत्? न हि परममङ्गलनामधेयत्वात् तस्य। तदेवाह यन्नाम इति तदपि नाम न स्मरणापेक्षमित्याह श्रुतमथ गदितम् अकस्मात्श्रुतमकस्मात् कीर्त्तितमिति सर्व्वधर्म्मा-श्रयत्वादपीत्याह यत्कृतो गोत्रधर्म्म इति—गोत्रेषु तत् तदृषिवंशेषु धर्म्मो यत्कृतः येन प्रवर्त्तितः। तस्य क्षिति-भारहरणञ्चैव न चित्रमित्याह कृष्णस्येति। कालचक्रायुधस्य सर्व्वसंहारकारणमूर्त्तेः विशेषतो दुरन्तप्रभावचक्रायुधस्य किमेतदित्यर्थः। *

द्वादशस्कन्धे द्वादशे सूतवाक्यम्:—

संकीर्त्यमानो भगवाननन्तः
श्रुतानुभावो व्यसनं हि पुंसाम्।
प्रविश्य चित्तं विधुनोत्यशेषं
यथा तमोऽर्कोऽभ्रमिवातिवातः ॥२५

भाः १२।१२।४८ ‡

संकीर्त्यमानो यद्वा श्रुतोऽनुभावो यस्य सः पुंसां चित्तं प्रविश्य निःशेषं दुःखं विधुनोति। सतामनुभावं प्रमाणयति अर्को गिरिगुहादिषु गतं ध्वान्तं न निवर्त्तयतीत्यपरितोषेण दृष्टान्तान्तरमाह अतिवातोऽभ्रमिवेति। **

पद्मपुराणे स्वर्गखण्डे बृहत्सहस्रनाम्नि वारानशी प्रयागादितीर्थस्नानादिभिः श्रमैः गयाश्राद्धादिभिः पित्र्यैरश्व मेधादिभिर्मखैः तुलापुरुषदानाद्यैः इत्यादि सर्व्वधर्म्मैः परं

† स्वामिटीकैवानुसृता। * स्वामिटीकातः क्वचित् स्वल्पीयान् पाठभेदोऽस्ति। ‡ भक्तिरत्नावल्याम् ३।१८
** स्वामिटीकैवानुसृता।

श्रेयो न यान्तीत्युक्तम्। तर्हि केन प्रकारेण सर्व्वेश्वरं विष्णु प्राप्नुवन्ति तदेवाह—

अनन्यगतयो मर्त्याः भोगिनोऽपि परन्तपाः।
ज्ञानवैराग्यरहिताः ब्रह्मचर्य्यादिवर्जिताः ॥२६

सर्व्वधर्म्मोज्झिताः विष्णोर्नाममात्रैकजल्पकाः।
सुखेन यांगति यान्ति न तां सर्व्वेऽपि धार्म्मिकाः ॥२७
पः पुः उत्तर खः ३१ अः

अन्येषु देवादिषु नास्ति मतिर्य्येषां ते वासुदेवभक्त्यैकमुख्यतया मोक्षार्थिनः भोगिनः स्रक् चन्दनवनिताद्यासक्तितरङ्गितचित्ततया अविवेकाः असमर्थाः परान् तापयन्ति अतएवाविद्वांसः ज्ञानवैराग्यरहिताः, नित्यानित्यवस्तुविचारशून्याः इहामूत्र फलभोग-( विराग ) रहिताः ब्रह्मचर्य्यादिवर्जिताः शम-दमादि साधनसम्पत्तिहीनाः सर्व्वधर्म्मोज्झिताः परमतत्वप्रवोध चिन्तान्तःकरणै मान्याभिधायिभिः सर्व्वैः धर्म्मैरुज्झिताः किन्तु विष्णुनामैकजल्पकाः एवम्भूता अपि विष्णुनाममात्रं जल्पन्ति। व्यक्तं वदन्ति—नापरं श्रेयः साधनं स्वाध्यायादि। तच्चेदुपांशु मानस वा जपति तदा मन्त्रात् शतसहस्रफलदायितया किं वक्तव्यम्। एवंभूता भगवद्भक्ताः सुखेन अनायासेन यां गतिं यान्ति तां सर्व्वेऽपि धार्म्मिकाः अपिशब्दात् ज्ञानवैराग्यादिसहिताश्च न यान्तीति सम्बन्धः।

यदि विष्णुनाममात्र जल्पका एव तरन्ति तर्हि विधिनिषेधात्मकस्य शास्त्रस्य का गतिरित्याह :—

स्मर्त्तव्यः सततं विष्णुर्व्विस्मर्त्तव्यो न जातुचित्।
सर्व्वे विधिनिषेधाः स्युरेतयोरेव किङ्कराः ॥२८

जात्विति कदाचिदर्थे सततं विष्णुः स्मर्त्तव्यः इत्यस्य विधेरन्ते सर्व्वे यागादिविधयः किङ्कराः अनुयायिनः। विष्णौ प्रीते यागादयो विहिता एव भवन्तीति भावः। तथा विष्णुविस्मरणस्याभक्ष्यभक्षणादिनिषेधाः किङ्करा अनुयायिनः विष्णुस्मरणनिषेधातिक्रमे अभक्ष्य भक्षणादि सर्व्वे निषेधाः अप्यतिक्रान्ताः भवन्तीत्यर्थः।

दशमे वेदस्तुतौ—

मिथ्या तर्ककुतर्कसेवितमहावादान्धकारान्तरे
भ्राम्यन् मन्दमतेरमन्दमहिमन् त्वज्ज्ञानवर्त्मा स्फुटम्।
श्रीमन्माधव वामन त्रिनयन श्रीशङ्कर श्रीपते
गोविन्देति मुदा वदन् मधुपते मुक्तः कदा स्यामहम् ॥२९
भाः १०।८७।२५ श्लोकीय श्रीधरटीकायाम्।

तथा वैष्णवानन्दलहरौ अर्जुन प्रति भगवद्वाक्यम् :—

सत्यं सत्यं पुनः सत्यं सत्यं सत्यं वदाम्यहम्।
नाम्नोऽन्यत् तारकं नास्ति समस्तभुविगोचरे ॥३०

इत्यादि भगवद् वचनानुसारेणैकशरणतया हरिगुणनामकीर्त्तनादन्यः परमो धर्म्मो महामोक्षप्रद नास्तीत्युक्तम्।

---

इति श्रीभक्तिरत्नाकरे कीर्त्तन माहात्म्यं नाम
सप्तमं माहात्म्यम्।

## अष्टमं स्मरणमाहात्म्यम्

अथ श्रीहरेः स्मरणमाहात्म्यं कथ्यते—द्वितीयस्कन्धे प्रथमाध्याये अतः परमतिश्रे यो नास्तीत्याह—

एतावान् सांख्ययोगाभ्यां स्वधर्म्म परिनिष्ठया ।
जन्मलाभः परं पुंसामन्ते नारायणस्मृतिः ॥१ *

भाः २।१।६

जन्मनो लाभः फलं तमाह नारायण स्मृतिरिति । सांख्यादिभिः साध्य इति तेषां स्वातन्त्र्यं (१) वारयति । सांख्य आत्मानात्माविवेकः । योगोऽष्टाङ्गः । अन्ते तु नारायणस्मृतिरिति परो लाभः न तन्महिमा वक्तुं शक्यते इत्यर्थः । †

तृतीये पञ्चमे तत्त्वस्तुतौ भक्तानुग्रहं स्मरन्त आहुः—

विश्वस्य जन्म स्थितिसंयमार्थे
कृतावतारस्य पदाम्बुजान्ते ।
व्रजाम सर्व्वे शरणं यदीश
स्मृतं (२) प्रयच्छत्यभयं स्वपुंसाम् ॥२

भाः ३।५।४२

हे ईश, तव चरणकमलं शरणं वयं व्रजामः । किम्भूतम्? यत् स्मृतं स्मरणमात्रेण स्वपुंसां भक्तानामभयं मोक्षं प्रयच्छति ददाति । यदिति निश्चये ।

चतुर्थस्कन्धे द्वाविंशाध्याये पृथुं प्रति सनतकुमारवाक्यम्—तमवेहीति ज्ञानमुपदिष्टम्, तस्य दुष्करत्वेन भक्तिमुपदिशति ।

यत् पादपङ्कज पलाशविलास भक्त्या
कर्माशयं ग्रथितमुद्ग्रथयन्ति सन्तः ।
तद्वन्नरिक्तमतयो यतयोऽपि, रुद्ध
स्रोतो गणास्त मरणं भज वासुदेवम् ॥३

भाः ४।२२।३६

यस्य तव पादपङ्कजयोः पलाशानि अङ्गुलयः तेषां विलासः कान्तिः तस्य भक्त्या स्मृत्या कर्म्माशयमहङ्काररूपं हृदयग्रन्थिं कर्म्मभिरेव ग्रथितम्; रिक्ता निर्व्विषया मतिर्येषां, रुद्धः प्रत्याहृतः स्रोतोगणः इन्द्रियवर्गोयेषाम् अरणम् शरणम् ।

दशमे वेदस्तुत टीकायाम् :—

चरणस्मरणं प्रेम्ना तव देव सुदुर्ल्लभम् ।
यथा कथञ्चिन्नृहरेर्ममभूयादहर्निशम् ॥४

भाः श्रीधरटीका १०।८७।२३

एकादशस्कन्धे चतुर्द्दशाध्याये उद्धवं प्रति भगवद् वाक्यम्—

किञ्च ज्ञानं नाम चित्तस्य मदाकार परिणामः स च मां भजतः स्वभावत एव भवति न तु जन्मान्तरमपेक्षते इति सदृष्टान्तमाह :—

विषयान् ध्यायतश्चित्तं विषयेषु विसज्जते ।
मामनुस्मरतश्चित्तं मय्येव प्रविलीयते ॥५ *

भाः ११।१४।२६

अस्मादन्यं साधनं तत्फलञ्च स्वप्नमनोरथवदभिध्यानमात्रम् । तस्मात्तद्विहाय मय्येव मतः समाहितं कुर्व्विति प्रकरणार्थमुपसंहरति—

* भक्तिरत्नावल्याम् ६।५ † स्वामिटीकैवोद्धृता । १ । स्वातन्त्र्येण लाभं वारयतीति स्वामिटीकायाम् । २ । स्मृतिम् इति मुद्रितभागवते पाठः । * भक्तिरत्नावल्याम् ६।२३

तस्मादसदभिध्यानं यथा स्वप्नमनोरथम्।
हित्वा मयि समाधत्स्व मनो मद्भावभावितम् ॥६ *
भाः ११।१४।७

मद्भावभावितं मद्भावेन मद्भजनेन शोधितम्। †
द्वादशे द्वादशाध्याये—यतः भक्तिहीनमात्रमधर्म्मादि केवलं व्यर्थम् अतस्तद्विहाय भगवद् गुणानुवादेन तत्स्मरणं कर्त्तव्यमित्याह :— †

यशः श्रियामेव परिश्रमः परो
वर्णाश्रमाचारतपःश्रुतादिषु।
अविस्मृतिः श्रीधरपादपद्मयोः
गुणानुवादश्रवणादरादिभिः ।७
भाः १२।१२।५०

किञ्च वर्णाश्रमाचारादिषु यः परो महान् परिश्रमः स एव केवलं यशो युक्ताय श्रियामेव कीर्त्तौ सम्पदि वा केवलं न परमपुरुषार्थः। गुणानुवादादिभिस्तु श्रीधरपादपद्मयोरविस्मृतिर्भवति।

ततः किमत आह :—

अविस्मृतिः कृष्णपदारविन्दयोः।
क्षिणोत्यभद्राणि शमस्तनोति (१) च ॥
सत्त्वस्य शुद्धिं परमात्मभक्तिं।
ज्ञानञ्च विज्ञानविरागयुक्तम् ॥८ **
भाः १२।१२।५१

अभद्राणि पापानि, क्षिणोति नाशयति। शमं ईश्वरनिष्ठतां बुद्धेः तनोति वर्द्धयति। सत्त्वस्य चित्तस्य शुद्धिं परमात्मभक्तिं प्रेमलक्षणं ज्ञानञ्च परमेश्वरविषयं विज्ञानम् अनुभवः विरागः विरक्तिश्च ताभ्यां युक्तम्।

विष्णुपुराणे षष्ठाध्याये पराशरवाक्यम्। विरक्तानामेकेन हरिस्मरणेन सर्व्वपापक्षयः स्यात्, तदेव दर्शयन्नाह—

कृते पापेऽनुतापो वै यस्य पुंसः प्रजायते।
प्रायश्चित्तन्तु तस्यैकं हरिसंस्मरणं परम् ॥८
विः पुः २।६।३६

पापे कृते यस्य पुंसः पुंमात्रस्य अनुतापो विरागो जायं, तस्य एक एव हरिस्मरणं प्रायश्चित्तं, न द्वितीयमित्यर्थः।

पद्मपुराणे स्वर्गखण्डे तदेव दर्शयन्ति—

नामैकं यस्य वाचि स्मरणपथगतं श्रोत्रमूलं गतं वा
शुद्धं वा शुद्धवर्णं व्यवहित रहितं तारयत्येव सत्यम्।

तच्चेद्देहद्रविणजनता लाभपाषण्डमध्ये
निक्षिप्तं स्यान्नफलजनकं शीघ्रमेवात्र विप्र। १०
पः पुः

यस्य वाचि वचसि स्मरणपथगतं वा श्रोत्रपथगतं वा एकन्नाम तारयतीति सत्यम्, यदि व्यवहितरहितं नामापराधरहितं स्यात्। देहश्च द्रविणञ्च धनञ्च जनता जनसमूहश्च तेषां कारणेन यो लाभः तेन पाषण्डवृद्धिर्य्येषां तेषां मध्ये तच्च नाम शीघ्रं फलप्रदं न भवतीत्यर्थः।

नरसिंहपुराणेऽष्टमे यमस्य वाक्यम् :—

* भक्तिरत्नावल्याम् ६।२६ † श्रीधरटीकैव सर्व्वत्रानुसृता। १। च शन्तनोतीति भागवते पाठः। ** भक्तिरत्नावल्याम् ६।८

नरसिंहो हृषीकेशः पुण्डरीकनिभेक्षणः ।
स्मृतो वै मुक्तिदो नृणाम् स त्वया किं न पूजितः ।।११

नरसिंह पुः—८।२२

इत्यादि वचनानुसारेणैकशरणतया केवलेन कृष्णस्मरणेन सर्व्वपापक्षयश्च मुक्तिश्चेति निर्णीतम् ।

इति भक्तिरत्नाकरे स्मरणमाहात्म्यं नाम अष्टमं माहात्म्यम् ।

———

# नवमं माहात्म्यम् ।

अथेदानीं कृष्णार्च्चनमाहात्म्यं कथ्यते ।

पयः पत्रादिमात्रेण पूजितो यः परं पदम् ।
प्रागेव दिशते प्रीतः स कृष्णः शरणं मम ।।१

नरसिंहपुराणे नवमे नारकान् प्रति यमस्य वाक्यम् :—

तुलसी दलमात्रेण जलस्य चुलुकेन च ।
विक्रीनीते य आत्मानं स त्वया किं न पूजितः ।।२

प्रथमे पञ्चमाध्याये :—

इति मूर्त्यभिधानेन मन्त्रमूर्त्तिममूर्त्तिकम् ।
यजते यज्ञपुरुषं स सम्यग् दर्शनः पुमान् ।।३

भाः १ ५।३८

अमूर्त्तिकं मन्त्रोक्तव्यतिरिक्तमूर्त्तिशून्यं, यजते पूजयति स पुमान् सम्यग् ज्ञानी । †

** पञ्चमेऽष्टादशे :—

निष्कामभजने अप्रार्थिता एव सर्व्वे कामा भवन्ति सकामभजने तु कामितमात्रमनित्यञ्चेत्याह—

या तस्य ते पादसरोरुहार्हणं
निकामयेत् साखिलकामलम्पटा ।
तदेव रासीप्सितमीप्सितोऽर्च्चितो
यद्भग्नयाच्ञा भगवन् प्रतप्यते ।४

भाः ५।१८।२१

या स्त्री तस्य उक्तलक्षणस्य ते तव पादसरोरुहस्यार्हणं पूजामेव कामयेत् न फलान्तरं, सा अखिलेषु कामेषु लम्पटा सर्व्वान् कामानाप्नोतीत्यर्थः । ईप्सितमीप्सितः फलान्तरमात्मुमपेक्षितः सन्नर्च्चितश्चेत् तर्हि तदेवैकं रासि ददासि । किञ्च यद् यतः फलभोगानन्तरं भग्ना याच्ञा याचितोऽर्थः यस्य स प्रतप्यते दुःखं प्राप्नोति । तदेव रासि न तु नित्यम् । †

चतुर्थे एकत्रिंशतमे—

कृष्णार्च्चनेनैव सर्व्वदेवताराधनं न पृथगित्याह—

यथा तरोर्म्मूलनिषेचनेन
तृप्यन्ति तत्स्कन्धभुजोपशाखाः ।
प्राणोपहाराच्च यथेन्द्रियाणां
तथैव सर्व्वार्हणमच्युतेज्या ।।५

भाः ४।३१।१२

** अनुसन्धान समितिस्थ पुस्तके एषः अधिकः पाठोऽस्ति "तृतीये एकविंशे कपिलवाक्यम् :—अथ मां सर्व्वभूतेषु भूतात्मानं कृतालयम् । अर्च्चयेद्दानमानाभ्यां मैत्रामित्रेन चक्षुषा । अतः सर्व्वभूतेषु कृतालयं कृतावासं, तत्र हेतुः भूतात्मानमन्तर्य्यामिणम् अभिन्नेन चक्षुषा समदर्शनेन" । (क) पुस्तकेत्वेषः पाठो नास्ति । रामचरणठाकुरेणापि असमीयानुवादे नैषः पाठः गृहीतः अतः एतद् भागवताद् केनचित्प्रक्षायोजितमिति मन्ये । † स्वामिटीकैवोद्धृता । * भक्तिरत्नावल्यामपि ८।१

स्कन्धात् विभागाः भुजाः तेषामप्युपरि शाखा (१) इत्युपलक्षणम्, पत्र-पुष्पादयोऽपि तृप्यन्ति। न तु मूलसेकं विना स्व स्व निसेचनेन तृप्यन्ति। प्राणस्योपहारो भोजनं तस्मादेवेन्द्रियाणां तृप्तिः, न तु तत्तदिन्द्रियेषु पृथग् गन्धादिलेपनात् तथा अच्युताराधनमेव सर्व्वदेवताराधनम् तृप्तिश्च न पृथिगत्यर्थः।

अष्टमे पञ्चमाध्याये—भगवन्तं प्रति ब्रह्मादीनां वाक्यम् :—ईश्वरार्पितस्य (२) कर्म्मणोऽनपेक्षकत्वमाह—

यथा हि स्कन्धशाखानां तरोर्म्मूल (३) निसेचनम्।
एवमाराधनं विष्णोः सर्व्वेषामात्मनश्च हि ॥६ *

भाः ८।५।३६

यथा हि वृक्षमूले सेचनं स्कन्धानां शाखानाञ्च तृप्तये भवति, तथा विष्णोराराधनं सर्व्वेषां देवादीनामात्मनः स्वस्य च तृप्तये भवतीति हि निश्चितम्।

इदानीं सकाम-निष्कामभेदेन विशेषमाह :—

द्रव्यैः प्रसिद्धै (४)र्मद्‌यागः प्रतिमादिष्वमायिनः।
भक्तस्य तु यथालब्धैर्हृदिभावेन चैव हि ॥७

भाः ११।२७।१५

प्रसिद्धैः प्रकर्षेण सिद्धैः सुशोभनैः अमायिनो निष्कामस्य भक्तस्य तु यथा लब्धैः यत्र चन्दनादीनि सर्व्वथा न लभ्यन्ते तत्र हृदिभावेन भावनया। यद्वा हृदि चेन्मद्‌यागः तदा भावेन मनोमयैर्द्रव्यैरित्यर्थः। †

अष्टमे द्वाविंशे वामनं प्रति ब्रह्मणो वाक्यम्।
एतदेव कैमुतिकन्यायेनाह :—

यत् पादयोरशठधीः सलिलं प्रदाय
दुर्व्वाङ्कुरैरपि विधाय सतीं सपर्य्याम्।
अप्युत्तमां गतिमसौ भजते त्रिलोकीं
दाश्वानविक्लवमनाः कथमार्त्तिमिच्छेत ॥८ *

भाः ८।२२।२३

यस्य तव पादयोः सलिलमात्रमपि प्रदाय सर्व्वोऽपि जन उत्तमां गतिमाप्नोति ; तस्मै तुभ्यन् असौ वलि त्रिलोकीमात्मानाञ्च दत्तवान् कथमार्त्तिमाप्नुयात्। †

बृहन्नारदीये—

सत्यं वच्मि हितं वच्मि सारं वच्मि पुनः पुनः।
असारे दग्धसंसारे सारं यद्धरिपूजनम् (५) ॥९

बृहन्नारदीये ३२।१०

इत्यादि वचनानुसारेण तदेकशरणतया कृष्णार्च्चनेनैव सर्व्वेषामाराधनं न पृथगिति निर्णीतम्।

इति भक्तिरत्नाकरेनवमं माहात्म्यम् ॥४॥

---

# दशमं माहात्म्यम्

अथेदानीं भगवद् भक्तियोगो निरूप्यते।

एकादशे द्वितीये निमिं प्रति कवेर्वाक्यम्। प्रथममात्यन्तिकं क्षेमं कथयति :—

---

१। "मूलात् स्कन्धात् प्रथम विभागः तेषामुपरि शाखा इत्युपलक्षणम्" इति (ख) पुस्तके पाठः। २। ईश्वरार्पितस्येति (ख) पुस्तके। ३। मूले च सेचनमिति (क) पुस्तके मूलावसेचनमिति मुद्रितभागवते च पाठः। ४। विशुद्धैरिति (ख) पुस्तके पाठः * भक्तिरत्नावल्यामपि धृतः ८, २, † स्वामिटीकैवोद्धृता। * भक्तिरत्नावल्यामपि ८।८ † स्वामिटीकैवानुसृता। ५। [illegible] (ख) पुस्तके पाठः यद्विष्णु पूजनति मुद्रित वृः नारदीये।

मन्ये कुतश्चिद् भयमच्युतस्य
पदाम्बुजोपासनमत्र नित्यम् ।
उद्विग्नबुद्धेरसदात्मभावात्
विश्वात्मना यत्र निवर्त्तते भीः ॥१ *

भाः ११।२।३५

न कुतश्चिद् भयं यस्मात्तदकुतश्चिद्भयम् । अत्र संसारे असदात्मभावात् असति देह-गेहादौ आत्मभावनातः नित्यं सर्व्वदा उद्विग्नबुद्धेः विश्वात्मना सर्व्वथा निःशेषं भीः निवर्त्तते यत्र पादाम्बुजोपासने तदेवमात्यन्तिकं कुशलमिति शेषः । †

ननु किमेवं परमेश्वरभजनेन ? अज्ञानकल्पितभयस्य ज्ञानैकनिवर्त्त्यत्वादित्याशङ्क्याह :—

भयं द्वितीयाभिनिवेशतः स्या-
दीशादपेतस्य विपर्य्ययोऽस्मृतिः ।
तन्माययातो बुध आभजेत्तं
भक्त्यैकयेशं गुरुदेवतात्मा ॥२ **

भाः ११।२।३५

यतो यन्मायया भयं भवेत् अतो बुधो बुद्धिमान् तमेव परमेश्वरमाभजेत् । ननु भयं देहाद्यभिनिवेशतो भवति, स च देहाहङ्कारतः, स च स्वरूपास्मरणात् । किमत्र तस्य मायया करोति (१) ? अत आह ईशादपेतस्येति । ईश्वरविमुखस्य तन्मायया अस्मृतिः स्वरूपास्फूर्त्ति । ततो विपर्य्ययो देहोऽस्मीति । ततो द्वितीयाभिनिवेशाद् भयं भवति । एवं हि प्रसिद्धं लौकिकीष्वपि मायासु । भजनप्रकारमाह—एकया अव्यभिचारिण्या भक्त्या भजेत । किञ्च, गुरुदेवतात्मा गुरुरेव देवता ईश्वर आत्मा प्रेष्ठश्च (२) यस्य तथाद्दष्टिः सन्नित्यर्थः । †

उक्तञ्च भगवता गीतायाम् :—

दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥३

भगवद् गीता ७।१४

दैवी देवस्य ममेश्वरस्य विष्णोरुद्भूता, (३) हि यस्मात् एषा यथोक्ता गुणमयी मम माया दुरत्यया दुःखेन अत्ययः अतिक्रमणं यस्याः सा अतः सर्व्वधर्म्मान् परित्यज्य मामेव मायाविनमात्मभूतं सर्व्वात्मना ये प्रपद्यन्ते ते मायामेतां सर्व्वभूतप्रमोहिनीं (४) तरन्ति संसारबन्धनान्मुच्यन्त इत्यर्थः । †

ननु विषयविक्षिप्तचित्तस्य कुतोऽव्यभिचारिणी भक्तिः सम्भवति ? कुतः स्यादभयं (५) ? तत्र तावद् विषयो नाम वास्तवो न भवेत् (६) किन्तु मनो विलासमात्रम् अतो मनोनियमेन तदभयं (७) स्यादित्याह :—

अविद्यमानोऽप्यवभाति हि द्वयो
ध्यातुर्धिया स्वप्नमनोरथौ यथा ।
तत्कर्म्म सङ्कल्प-विकल्पकं मनो
बुधो निरुन्ध्यादभयं ततः स्यात् ॥४

भाः ११।२।३६

धिया मनसा ध्यातुः पुंसः द्वयः द्वैतप्रपञ्चः अविद्यमानोऽपि मृषाभूतोऽपि अवभाति प्रकाशते यथा स्वप्नमनोरथौ कर्म्म सङ्कल्पयति विकल्पयति

* भक्तिरत्नावल्यामपि ७।२५ † स्वामिटीकैवानुसृता ** भक्तिरत्नावल्यामपि १।६७ १। स्फूरतीति (ख) पुस्तके पाठः । २। श्रेष्ठ इति श्रीधरस्वामिटीका । ३। विष्णो स्वभावभूतेति शङ्करभाष्यम् हनुमद् भाष्यञ्च । मयैव निर्म्मितेति रामानुज भाष्यम । † व्याख्यानमेतत् शङ्कर भाष्यतो गृहीतमिति प्रतिभाति । भगवत्पादेन तु मायया भगवत् स्वभावतोक्ता । अत्र तु आचार्य्यरामानुजसम्मतमिवास्याः भगवदुद्भवत्वमुक्तमिति द्रष्टव्यम् । ४। सर्व्वभूतचित्र मोहिनीमिति शङ्करभाष्यम् । ५। कुतस्तरामभयमिति श्रीधरटीका पाठः । ६। न वास्तवोऽस्तीति श्रीधरटीका । ७। भजनादभयं स्यादिति श्रीधरटीका ।

तन्मनः बुधः बुद्धिमान् निरुन्ध्यात्, ततश्च एकया अव्यभिचारिण्या भक्त्या भजनादभयं भवति। ततश्च भगवत्प्रसादेन कृतार्थो भवतीत्याह :— †

इत्यच्युताङ्घ्रिं भजतोऽनुवृत्त्या
भक्तिर्विरक्तिर्भगवत् प्रबोध।
भवन्ति वै भागवतस्य राजन्
ततः परां शान्तिमुपैति साक्षात् ॥५ *

भाः २।२।३२

इति अनेन प्रकारेण अच्युताङ्घ्रिं भजतः पुंसः तदैव श्रीकृष्णस्य प्रसादात् भक्तिः प्रेमलक्षणा, विरक्तिः देहगेहे भगवत् प्रबोधः प्रेमास्पदभगवद्रूपस्फूर्त्तिश्च एते युगपत् भवति। ततः शान्तिं मुक्तिं साक्षादुपैति प्राप्नोतीत्यर्थः।

द्वितीये द्वितीयाध्याये परीक्षितं प्रति शुकोक्तिः सन्ति संसरतः पुंसः बहवो मोक्षमार्गाः तपो योगादयः समीचीनस्त्वयमेवेत्याह—

नह्यतोऽन्यः शिवः पन्था विशतः संसृताविह।
वासुदेवे भगवति भक्तियोगो यतो भवेत्।६

भाः २।२।३३

यतः स्वनुष्ठितात् भक्तियोगो भवेत्। अतोऽन्यः शिवः सुखरूपो निर्व्विघ्नश्च यतो नास्त्येव। †

कुत एतदत आह :—

भगवान् ब्रह्म कार्त्स्न्येन त्रिरन्वीक्ष्य मनीषया।
तदध्यवस्यत् कूटस्थो रतिरात्मन् यतो भवेत् ॥७

भाः २।२।३४

भगवान् ब्रह्मा कूटस्थो निर्व्विकारः एकाग्रचित्तः सन् त्रिः त्रीन् वारान् कार्त्स्न्येन साकल्येन ब्रह्म वेदम् अन्वीक्ष्य विचार्य्य यत आत्मनि हरौ रतिर्भवेत् तदेव मणीषया बुद्ध्या अध्यवस्यत् निश्चितवान्। †

उपसंहारमाह—

तस्मात् सर्व्वात्मना राजन् हरिः सर्व्वत्र सर्व्वदा।
श्रोतव्यः कीर्त्तितव्यश्च स्मर्त्तव्यो भगवान् नृणाम् ॥८

भाः २।२।३६

तृतीये नवमे नारायणं प्रति ब्रह्मवाक्यम् :—
तदेवमभक्तानां संसारनिवृत्तिः, भक्तानां निवृत्तिमाह—

त्वं भाव-योग-परिभावित-हृत्सरोजे
आस्से श्रुतेक्षितपथो ननु नाथ पुंसाम्।
यद् यद्धिया त उरुगाय विभावयन्ति।
तत्तद् वपुः प्रणयसे मदनुग्रहाय ॥९

भाः ३।९।११

भक्तियोगेन शोधिते हृत्सरोजे आस्से तिष्ठसि। श्रुतेन श्रवणेन ईक्षितः पन्थाः यस्य; किञ्च श्रवणं विनापि तद्भक्ताः मनसा यद् यद् वपुः रूपं स्वेच्छया ध्यायन्ति तत्तत् प्रणयसे प्रकटयसि। सतां भक्तानामनुग्रहाय। †

तत्रैव द्वात्रिंशे देवहूतिं प्रति कपिलवाक्यम् :—

तस्मात्त्वं सर्व्वभावेन भजस्व परमेष्ठिनम्।
तद्गुणाश्रयया भक्त्या भजनीयपदाम्बुजम् ॥१० *

भाः ३।३२।१७

---

† श्रीधरव्याख्यानंस्वल्पपरिवर्त्तितं गृहीतवान्। * भक्तिरत्नावल्यामपि ७।३१ † स्वामिटीकैवानुसृता।
* भक्तिरत्नावल्यामपि धृतः १।३०

परमेष्ठिनं परमेश्वरं प्रीत्या तस्य गुणानाश्रयते या भक्तिः तया। †

चतुर्थस्कन्धे चतुर्व्विंशे दशप्रचेतसं प्रति रुद्रवाक्यम् :—

तं दुराराध्यमाराध्य सतामपि दुरापया।
एकान्तभक्त्या को वाञ्छेत् पादमूलं विना वहिः ॥११
भाः ४।२४।५२

दुरापया दुष्प्रापया एकान्तभक्त्या अव्यभिचारिण्या भक्तयया वहिरिन्द्रियसुखम्।

तत्रैव—

तमेवात्मानमात्मस्थं सर्व्वभूतेष्व(१)वस्थितम्।
पूजयध्वं गृणन्तश्च ध्यायन्तश्चासकृद्धरिम् ॥१२
भाः ४।२४।६५

आत्मानं परमात्मानम्, आत्मस्थं चित्तस्थम्।

षष्ठे द्वादशे वृत्रं प्रति इन्द्रवाक्यम् :—

यस्य भक्तिर्भगवति हरौ निःश्रेयसि परे।
विक्रीडितोऽमृताम्भोधौ किं क्षुद्रैः खातकोदकैः ॥१६
भाः ६।१२।१८

तस्य खातकोदकैः गर्त्तादिजलोपमैः स्वर्गादिभिः किं प्रयोजनमस्ति।

सप्तमे प्रह्लादवाक्यम् :—अव्यभिचारिण्या भक्त्यैव हरितोषणं नान्यदित्याशयेनाह द्वाभ्याम् :—

नालं देवत्वं द्विजत्वमृषित्वं वाऽसुरात्मजाः।
प्रीणनाय मुकुन्दस्य न वृत्तं न बहुज्ञता ॥
न दानं न तपो नेज्या न शौचं न व्रतानि च। †
प्रीयतेऽमलया भक्त्या हरेरन्यद् विडम्बनम् ॥१५
भाः ७।७।५१+५२

मुकुन्दस्य प्रीणनाय प्रीतये नालं न समर्थं द्विजत्वं, देवत्वम्, ऋषित्वञ्च, वृत्तं सदाचारः, बहुज्ञता भूरिशास्त्रज्ञानम्, दानं तुलापुरुषादि, तपः कृच्छ्रादि, इज्या अश्वमेधादि, शौचं वाह्याभ्यान्तरं व्रतानि एकादश्युपवासादीनि एते कृष्णस्य प्रीतये न समर्थाः। किन्तु अमलया अव्यभिचारिण्या भक्त्या एव हरिः प्रीयते, तदन्यत् सर्व्वं विडम्बनम् नटनमात्रमित्यर्थः।

दशमे भगवन्तं प्रति श्रुतदेववाक्यम्। कर्म्मणि विश्वसितानां हृत्कमलस्थोऽपि भगवान् विदूरगतो भवति, स्वभक्तिपराणान्तु समीपत एव निजं रूपं दर्शयतीत्याशयेनाह—

हृदिस्थोऽप्यतिदूरस्थः कर्म्मविक्षिप्तचेतसाम्।
आत्मशक्तिभिरग्राह्योऽप्यस्त्युपेतगुणात्मनाम् ॥१६
भाः १०।८६।४७

कर्म्मसु विक्षिप्तं विश्वसितं चेतो येषां तेषां हृदिस्थोऽपि श्रीकृष्णः दूरस्थो भवति, किन्तु आत्मशक्तिभिः अहङ्कारादिभिः अग्राह्यो व्यवहितोऽपि उपेतगुणात्मनाम् उपेतः प्राप्तः गुणः श्रवणकीर्त्तनादिसंस्कारः आत्मा अन्तःकरणम् अहङ्कारादिर्येषां तेषाम् अस्ति समीपे अव्यवहित इत्यर्थः।

एकादशे उद्धववाक्यम्। यतो ज्ञान-कर्म्मपथे केवलं विषीदन्ति अतएवेत्याह :—

† स्वामिटीकैवोद्धृता। १। भूतव्यवस्थितमिति (क) पुस्तके पाठः। † भक्तिरत्नावल्याम् धृतः १।५६. ५७

अथात (१) आनन्ददुघं पदाम्बुजं
हंसाःश्रयेरन्नरविन्दलोचन ।
सुखं नु विश्वेश्वर योगकर्म्मभि-
स्त्वन्माययामी विहता न मानिनः ॥१७ †

भाः ११।२६।३

अथ भो अरविन्दलोचन, ये हंसाः सारासार-विवेकचतुराः तव पदाम्बुजमेव सुखं यथा भवति तथा आश्रयेरन् भजन्ते, नु निश्चितम्। किम्भूतम् आनन्ददुघं समस्तानन्दपरिपूरकम्। हे विश्वेश्वर अमी योगकर्म्मभिर्युक्तास्तन्मायया विहताः मानिनः गर्व्ववन्तो यथा भवन्ति तद्भक्तास्तथा नेति निश्चितम्। यद्वा अमी तद्भक्ताः तन्मायया न विहता अतएव योग कर्म्मभिः हताः मानिनो न भवन्ति। अन्ये तु तन्मायया मोहिताः सन्तो योगज्ञा वयं कर्म्मकुशला वयमिति केवलं गर्व्ववन्तो भवन्ति न तु मुच्यन्त इत्यर्थः।

अष्टमे श्रीभगवन्तं प्रति सत्यव्रतस्य स्तुतिवाक्यम्। ननु यज्ञदानादिभिः सत्त्वशुद्धिं विना कथमहङ्कारबन्धच्छेदः स्यात् तत्राह—

यत् सेवयाग्नेरिव रुद्ररोदनं
पुमान् विजह्यान्मलमात्मनस्तमः ।
भजेत वर्णं निजमेव सोऽव्ययो
भूयात् स ईश परमो गुरोर्गुरुः ॥१८

भाः ८।२४।४८

हे प्रभो, यत् यस्य तव सेवया आत्मनः मनसः मलं तमोऽज्ञानञ्च पुमान् पुंमात्रोऽपि जह्यात् जहाति, निजं वर्णं निजस्वरूपं भजेत धत्ते च अव्ययः, अविनाशी स ईश्वरो भगवान् मम गुरोरपि परमो गुरुर्भूयात्। दृष्टान्तेन स्फुटयति-यथा अग्नेः सम्पर्कात् रुद्ररोदनं रजतं मलं जहाति स्वं वर्णं भजते च न तु क्षालनादिभि। तथा न तपो यज्ञादिभिर्मलत्यागः किन्तु तत्सेवयैव। तेषां तत् सेवाङ्गत्वमितिभावः।

तत्रैव ननु वैराग्यं विना कुतो मुक्तिः? तर्हि तस्य तत्सेवैकफलत्वात् सेवामादिशेत्याशयेनाह :—

जनोऽबुधोऽयं निजकर्म्मबन्धनः
सुखेच्छया कर्म्म समीहतेऽसुखम् ।
यत्सेवया तां विधुनोत्यसन्मतिं
ग्रन्थिं स भिन्द्यात् हृदये स मे(२) गुरुः ॥१९

भाः ८।२४। ८

अयं जनः अबुधः अज्ञानी, कुतः? निजकर्म्म-बन्धनः निजकर्म्मणात्मानं बध्नाति यतः सुखेच्छया असुखं कर्म्म समीहते असन्मतिम्. इहामुत्र भोगेषु अभिनिविष्टा या मतिः तां यद् यस्य सेवया भक्त्या विधुनोति नाशयति स परमेश्वरः भगवान् मे मम गुरु-र्भूत्वा हृदये ग्रन्थिमहङ्कारबन्धं भिन्द्यात् छिन्द्या-दित्यर्थः।

दशमे चतुर्द्दशे ब्रह्मस्तुतौ; ननु यदि मम महिमानं ज्ञातुं न कोऽपि समर्थः तर्हि अज्ञाः कथं संसारं तरेयुः तत्राह :

ज्ञाने प्रयासमुदपास्य नमन्त एव
जीवन्ति सन्मुखरितां भवदीयवार्त्ताम् ।

१। भवानन्द इति (क) पुस्तके पाठः। † भक्तिरत्नाव्ल्यामपि ७।७ २। 'नो' इति मुद्रित भागवते पाठान्तरम्।

स्थाने स्थिताः श्रुतिगतां तनुवाङ्मनोभिः
ये प्रायशो जितजितोऽप्यजितैस्त्रिलोक्याम् ॥२० †
भाः १०।१४।३

उदपास्य प्रयासमीषदप्यकृत्वा सद्भिर्मुखरितां स्वत एव नित्यं प्रकटितां भवदीयां वार्त्तां स्वस्थान-एवस्थिताः तत्सन्निधिमात्रेण अतएव श्रुतिगतां श्रवणं प्राप्तां तनुवाङ्मनोभिर्नमन्तः केवलं सत्कुर्व्वन्तः जीवन्ति ये ते प्रायशः त्रिलोक्याम् अन्यैरजितोऽपि तैर्जितः प्राप्तोऽसि किं ज्ञानेनेत्यर्थः। *

तत्रैव सप्ताशीतितमे वेदस्तुतिटीकायाम् :—

क्काहं बुद्ध्यादिसंरुद्धः क्क च भूमन् महस्तव।
दीनवन्धो दयासिन्धो भक्तिं मे नृहरे दिश ॥२१ **
भाः श्रीधरीटीका १०।८७।२४

दशमस्कन्धान्तेऽनुवृत्तिफलमाह :—
मर्त्यस्तथा ननु समेधितया मुकुन्द
श्रीमत्कथाश्रवण-कीर्त्तनचिन्तयैति।
तद्धामदुस्तरकृतान्तजवाऽपवर्गं
ग्रामाद् वनं क्षितिभुजोऽपि ययुर्यदर्थाः ॥२२
भाः १०।९०।४९ †

श्रीमत्याः कथायाः श्रवण-कीर्त्तनयुक्तया चिन्तया समेधितया सम्वर्द्धितया अनुवृत्त्या तन्निष्ठत्वेन तस्य धाम लोकमेति। लोकत्वेऽपि कालानाकलित(१) मित्याह दुस्तरेति। दुर्लभपरमपुरुषार्थमाह(२) ग्रामादिति। †

एकादशे तृतीये प्रबुद्धवाक्यम् :—

श्रवणं कीर्त्तनं ध्यानं हरेरद्भुतकर्म्मणः।
जन्मकर्म्मगुणानाञ्च तदर्थेऽखिलचेष्टितम् ॥२३
भाः ११।३।२७

हरेर्जन्मकर्म्मगुणानां श्रवणादि तदर्थे हर्य्युद्देशेन सर्व्वं कर्म्म सिद्धयेत्।

इष्टं दत्तं तपो जप्तं वृत्तं यच्चात्मनः प्रियम्।
दारान् सुतान् गृहान् प्राणान् परस्मै च निवेदनम् ॥२४
भाः ११।३।२८ †

विशेषतश्च यजनादि यत्तदर्थे शिक्षेत्। इष्टं दत्तमित्यादयो भावे निष्ठाः। वृत्तं सदाचारः आत्मनः प्रियम् गन्धचन्दनादि दारादिना लब्धम्। परस्मै परमेश्वराय निवेदनं तत्सेवकतया समर्पणम् यत् तत् शिक्षेत्। *

तत्रैकादशाध्याये उद्धवं प्रति भगवद्वाक्यम् :—
भक्तेर्लक्षणमाहाष्टभिः श्लोकैः :—

मल्लिङ्गमद्भक्तजन-दर्शनस्पर्शनार्च्चनम्।
परिचर्य्यास्तुतिः प्रह्व (३) गुणकर्म्मानुकीर्त्तनम् ॥२५
भाः ११।११।३४

मल्लिङ्गं मत्प्रतिमा मद्भक्ताश्च तेषां दर्शन-स्पर्शनार्च्चनादीनि परिचर्य्या सेवा प्रह्वः(४) नम्रता गुणकर्म्मानुकीर्त्तनम् यत्।

मत्कथाश्रवणे श्रद्धा मदनुध्यानमुद्धव।
सर्व्वलाभोपहरणं दास्येनात्मनिवेदनम् ॥२६
भाः ११।११।३५

† भक्तिरत्नावल्याम् ४।४ * स्वामिटीकानुसरणं कृतम्। ** "दानवान् नो दयासिन्धो भक्तीश नृहरेदिश" इति (ख) पुस्तके पाठान्तरम्। † भक्तिरत्नावल्यामपि ३।५२ + ५।७६ ‡ श्रीधरव्याख्यानमनुसृतम्। १। कालानवलोकितमित्यादर्शो (क) पुस्तके। कालानाकलितत्वमिति मुद्रित स्वामिटीका। २। पुरुषार्थत्वमाहेति मुद्रित स्वामिटीका। ३। प्रश्र इति (ख) पुस्तके। ४। प्रह्वा स्तुतिरिति (ख) पुस्तके।

सर्व्वस्य लब्धस्य समर्पणम् दासभावेन देहार्पणम्।

मज्जन्मकर्म्मकथनं ममपर्व्वानुमोदनम्।
गीततान्डववादित्रगोष्ठीभिर्मद्‌गृहोत्सवः ॥२७

भाः ११।११।३६

पर्व्वाणि जन्माष्टम्यादीनि तदनुमोदनम्।

यात्रा बलिविधानञ्च सर्व्ववार्षिकपर्व्वसु।
वैदिकी-तान्त्रिकी दीक्षा मदीयव्रतधारणम् ॥२८

भाः ११।११।३७

बलिविधानं पुष्पोपहारादि समर्पणम्। सर्व्ववार्षिकपर्व्वसु चातुर्म्मास्यैकादश्यादिषु विशेषतः। †

ममार्चास्थापने श्रद्धा स्वतः संहत्य चोद्यमः।
उद्यानोपवनाक्रीड़पुरमन्दिरकर्म्मणि ॥२६

भाः ११।११।३८

सम्मार्ज्जनोपलेपाभ्यां सेकमण्डलवर्त्तनैः।
गृहशुश्रूषणं मह्यं दासवद् यदमायया ॥३०

भाः ११।११।३६

उद्यानादिकरणे सामर्थ्ये सति। स्वतोऽसतिचान्यैः सम्भूय उद्यमः। उद्यानं पुष्पप्रधानं; वनमुपवन फलप्रधानम्; आक्रीड़ं क्रीड़ास्थानं; सम्मार्जनं रजसोऽपाकरणम्; उपलेपः गोमयोदकादिभिरालेपनम्; सेकः तैरेव प्रोक्षणं, मण्डलवर्त्तनं सर्व्वतोभद्रादिकरणम्; मह्यं मम, अमायया अकपटभावेन †

अमानित्वमदम्भित्वं कृतस्यापरिकीर्त्तनम्।
अपि दीपावलोकं मे नोपयुञ्ज्यान्निवेदितम् ॥३१

भाः ११।११।४०

निवेदितमिति स्वयमन्येन वा निवेदितं नोपयुञ्ज्यात् न स्वीकुर्य्यात्। एतच्च साधारण (१) विषयम् रागप्राप्तविषयं वा भक्त्या तु ग्राह्यमेव, :—

"षड्भिर्मासोपवासैस्तु यत्फलं परिकीर्त्तितम्।
विष्णोर्नैवेद्यसिक्थेन तत्फलं भुञ्जतां कलौ॥
हृदिरूपं मुखे नाम, नैवेद्यमुदरे हरेः।
पादोदकञ्च निर्म्माल्यं मस्तके यस्य सोऽच्युतः॥"

इत्यादि वचनेभ्यः। यद्वा अन्यस्मै निवेदितं मे नोपयुञ्ज्यात् मह्यं न निवेदयेदित्यर्थः।

"विष्णोर्निवेदितान्नेन यष्टव्यं देवतान्तरम्।
पितृभ्यश्चापि तद्देयं तदानन्त्याय कल्पते॥"
पितृशेषन्तु यो दद्याद्धरये परमात्मने।
रेतोधाः पितरस्तस्य भवन्ति क्लेशभागिनः" ॥

इति॥ †

प्रथमस्कन्धे पञ्चमाध्याये व्यासं प्रति नारदवाक्यं :— विनापि पदचातुर्य्यं भगवद् यशः प्रधानं वचः पवित्रमित्याह :—

तद् वाग्विसर्गो जनताघविप्लवो
यस्मिन् प्रतिश्लोकमबद्धवत्यपि।
नामान्यनन्तस्य यशोऽङ्कितानि यत्
शृण्वन्ति गायन्ति गृणन्ति साधवः ॥३२ *

भाः [illegible]

† स्वामिटीकैवोद्धृता। १। साधारण्स्याबद्धविषयमिति स्वामिटीकायां पाठः। * भक्तिरत्नाकरः पृ: ११[illegible]

स चासौ वाग्विसर्गश्च वाचः प्रयोग। जनसमूहो जनता तस्य अघं विप्लावयति नाशयतीति तथा। यस्मिन् वाग्विसर्गे बद्धवत्यपि अपशब्दादि युक्तेऽपि प्रतिश्लोकमनन्तस्य यशसा अङ्कितानि नामानि भवन्ति। तत्र हेतुः यत् यानि नामानि साधवो महान्तः वक्तरि सति शृण्वन्ति श्रोतरि सति गायन्ति द्वयोरभावे स्वयमेव गृणन्ति कीर्त्तयन्तीत्यर्थः। †

तत्र षष्ठे :—

नामान्यनन्तस्य हतत्रपः पठन्
गुह्यानि भद्राणि कृतानि च स्मरण्
गां पर्य्यटंस्तुष्टमना गतस्पृहः
कालं प्रतीक्षन्नमदो विमत्सरः ॥३३

भाः १।६।२६

हतत्रपः त्यक्तलज्जः; परोत्कर्षासहणं मत्सरः तद्रोहितो जातः स इतिशेषः। कालमपेक्षमानः (१) सन्।

तत्राष्टमे पृथा(२)वाक्यम्; श्रवणस्मरणार्हणानि करिष्यन्निति केचन; तस्य पक्षस्य सिद्धान्ततामभिप्रेत्य श्रवणादिफलमाह—

शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः
स्मरन्ति नन्दन्ति तवेहितं जनाः।
त एव पश्यन्त्यचिरेण तावकं
भवप्रवाहोपरमं पदाम्बुजम् ॥३४ *

भाः १।८।३५

नन्दन्ति अन्यैः कीर्त्यमानमभिनन्दति ये जनाः; तवेहितं तव चरितं तावकं तदीयं पदाम्बुजम् अचिरेण पश्यन्त्येवेति सर्व्वत्रावधारणम्; कीदृशम्? भवप्रवाहस्य जन्मपरम्पराया उपरमो यस्मिन् तत्। †

तत्राष्टादशे सूतं प्रति शौनकादिवाक्यम् :—

श्रीकृष्णस्य यशः मर्त्यानाममृतमतः कथयेत्याह :—

कर्म्मण्यस्मिन्ननाश्वासे धूम-धूम्रात्मनां भवान्।
आपाययति गोविन्द पादपद्मासवं मधु ॥३५ *

भाः १।१८।१२

अस्मिन् कर्म्मणि सत्रे अनाश्वासे अविश्वसनीये वैगुण्यबाहुल्ये(३) फलनिश्चयाभावात्; धूमेन धूम्रः विवर्ण आत्मा शरीरं येषां तानस्मान्; कर्म्मणि षष्ठी। आसवं मकरन्दं; मधु मधुरम्। †

तत्रैव द्वितीये शौनकादीन् प्रति सूतवाक्यम् :—

यस्माद् भक्तिविहीनो धर्म्मः केवलं श्रम एव तस्माद् भक्तिप्रधान एव धर्म्मोऽनुष्ठेय इत्याह :— †

तस्मादेकेन मनसा भगवान् सात्वतां पतिः।
श्रोतव्यः कीर्त्तितव्यश्च ध्येयः पूज्यश्च नित्यशः ॥३६

भाः १।२।१४

एकेन मनसा एकस्मिन्नीश्वर एव निश्चितेन मनसा। इत्यादिवचनानुसारेणैकशरणतया कृष्णभक्त्यैव संसारनिस्तारो(४) नान्यथेति निर्णीतम्।

इति भक्तिरत्नाकरे भगवद्भक्तिनिरुपणं नाम
दशमं माहात्म्यम् ॥

---

† स्वामिव्याख्यानमेव गृहीतम्। १। कालमपेक्षः सन् इति आदर्शे पाठः। २। कुन्तीवाक्यमिति (ख) पुस्तके। * भक्तिरत्नावल्याम् ३।८। ३। बाहुल्यैनेति मुद्रित स्वामिटीका। ४। निस्तारोपाय इति आदर्शे पाठः। * भक्तिरत्नावल्याम् ४।३७।

# एकादश माहात्म्यम्

अथोत्तमां भक्तिं निरूपयति (१)।

काचित्त्वय्युचिता भक्तिरिति मात्रा पृष्टः कपिलः उत्तमां भक्तिं कथयति :—

देवानां गुणलिङ्गानामानुश्रविककर्म्मणाम् ।
सत्त्व एवैकमनसो वृत्तिः स्वाभाविकी तु या ॥१ *
भाः ३।२५।३२

गुणाः विषयाः ज्ञायन्ते यैः तेषां देवानां द्योतनात्मकानाम् इन्द्रियानां तदधिष्ठातॄणामिति वा ; सत्त्वे सत्त्वमूर्त्तौ हरावेव या वृत्तिः सा भक्तिः सिद्धेर्मुक्तेरपि गरीयसीत्युत्तरेणान्वयः। स्वाभाविकी अयत्नसिद्धा तेषामेवम्विधवृत्तौ हेतुमाह :—गुरोरुच्चारणमनुश्रूयते इत्यनुश्रवो वेदः तद्विहितमानुश्रविकं कर्म्म येषाम् अतएव एकमेकरूपमविकृतं मनो यस्य पुंसः शुद्धसत्त्वस्येत्यर्थः। †

अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसी।
जरयत्याशु या कोशं निगीर्णमनलो यथा ॥२ *
भाः ३।२५।३३

अनिमित्ता निष्कामा या भक्तिः सा सिद्धेः मुक्तेरपि गरीयसी। मुक्तिश्च प्रासङ्गिकी भवत्येवेत्याह :

या भक्तिः कोशं लिङ्गशरीरं जरयति क्षपयति स्वप्रयत्नं विनैव सिद्धौ दृष्टान्तः—निगीर्णं मुक्तमन्नं जाठरोऽनलो यथा जरयतीति। †

भक्तेर्गरीयस्त्वमेवोपपादयति :—

नैकात्मतां मे स्पृहयन्ति केचित्
मत्पादसेवाभिरता मदीहाः।
येऽन्योन्यतो भागवताः प्रसज्य
सभाजयन्ते मम पौरुषाणि ॥३ *
भाः ३।२५।३४

एकात्मतां सायुज्यमोक्षम् ; मदर्थमीहा क्रिया येषाम् ते प्रसज्य आसक्तिं कृत्वा ; पौरुषाणि वीर्य्याणि। †

एवम्भूतान्तु मुक्तिमेकान्तभक्तेभ्यो ददामीत्याह द्वाभ्याम् :—

इमं लोकं तथैवामुमात्मानमुभयायिनम्।
आत्मानमनु ये चेह ये रायः पशवो गृहाः ॥४ *
भाः ३।२५।३९

उभयायिनं लोकद्वयगामिनम् आत्मानं सोपाधिकम् देहमनु ये पुत्र-कलत्रादयः ये च पश्वादयः रायः धनानि। †

विसृज्य सर्व्वानन्यांश्च मामेव विश्वतोमुखम्।
भजन्त्यनन्यया भक्त्या तान् मृत्योरतिपारये ॥५ *
भाः ३।२५।४०

अन्यान् च परिग्रहान् विसृज्य अनन्यया अव्यभिचारिण्या भक्त्या मां ये भजन्ति तान् मृत्योः संसारात् अतिपारयामि तारयामि।

तत्र ऊनविंशे भक्तानां निष्कामतां कैमुतिकन्यायेनाह—

† स्वामिव्याख्यानमेवानुसृतम्। १। निरूप्यत इत्यादर्शे पाठः। * भक्तिरत्नावल्याम् १।२०+१।२१+१।२२। [illegible] धानुसृता। * भक्तिरत्नावल्यामपि १।२७+१।२८।

सालोक्य-सार्ष्टि-सामीप्य-सारूप्यैकत्वमप्युत ।
दीयमानं न गृह्णन्ति विना मत्शरणं जनाः ॥६
भाः ३।२९।१३

सालोक्यं मयासहैकस्मिन् लोके निवासं, सार्ष्टिं समानैश्वर्य्यं, सामीप्यं निकटवर्त्तित्वं, सारूप्यं समानरूपताम्, एकत्वं सायुज्यम् तत्त्वतो दीयमानमपि न गृह्णन्ति कुतोऽन्यत् कामयते ? ‡ नेत्यर्थः ।

षष्ठस्कन्धे प्रथमाध्याये शुकोक्तिः :—

ज्ञानादेरतिदुष्करत्वात् सुखमेवान्यत् प्रायश्चित्तमाह :—

केचित् केवलया भक्त्या वासुदेवपरायणाः ।
अघं धुन्वन्ति कार्त्स्न्येन नीहारमिव भास्करः ॥७
भाः ६।१।१३

एवंविधा भक्तिप्रधाना विरला इति दर्शयति—केवलया तप आदि निरपेक्षया वासुदेवपरायणा इति नाधिकारिविशेषणमेतत् किन्त्वन्येषामश्रद्धया तत्र प्रवृत्ति-बलात्(१) तेष्वेव पर्य्यवसानादनुवादमात्रम् । †

पञ्चमे षष्ठाध्याये शुकोक्तिः :—भागवतधर्म्मस्यातिदुष्करत्वान्मोक्षस्यातिसुलभत्वादियमतिस्तुतिरेवेत्याशङ्क्याह :—

राजन् पतिर्गुरुरयं(२) भवतां यदूनाम्
दैवं प्रियः कुलपतिः क्व च किङ्करो वः ।
अस्त्वेवमङ्ग भगवान् भजतां मुकुन्दो
मुक्तिं ददाति कर्हिचित् स्म न भक्तियोगम् ॥८ *
भाः ५।६।१८

भवतां यदूनां पतिः पालकः, गुरुरुपदेष्टा, दैवमुपास्यः, प्रियः सुहृत्, कुलपतिर्नियन्ता, किम्बहुना क्व च कदाचित् दौत्यादिषु वो युष्माकं युधिष्ठिरादीनां किङ्करः अनुवर्त्ती; अस्तु नामैवं तथापि अन्येषां नित्यं भजतामपि मुक्तिं ददाति न कदाचिदपि सप्रेमभक्तियोगम् । †

दशमे सप्ताशीतितमे वेदस्तुतौ मुक्तेरप्याधिक्यं भक्तेर्दर्शयतीत्याह :—

तत्कथामृत-पाथोधौ विहरन्तो महामदाः ।
कुर्व्वन्ति कृतिनः केचित् चातुर्व्वर्गं तृणोपमम् ॥९
भाः १०।८७।२१ श्रीधरीटीका ।

मुक्तावपि लीलाविग्रहं कृत्वा भजन्ते इति भावः ।
एकादशे चतुर्द्दशे भक्तेर्म्मुख्यत्वमाह :—

मय्यर्पितात्मनः सभ्य ! निरपेक्षस्य सर्व्वतः ।
मयात्मना सुखं यत्तत् कुतः स्याद्विषयात्मनाम् ॥१० *
भाः ११।१४।११

हे सभ्य, मया परमानन्दरूपेण आत्मना स्वरूपेण(३) स्फुरता । † तत्र तृतीये कदा तर्हि अविद्या निवर्त्तकोऽनुभवो भवेदत आह :—

यर्ह्यब्जनाभचरणैषणयोरुभक्त्या
चेतो मलानि विधमेद् गुण-कर्म्मजानि ।
तस्मिन् विशुद्ध उपलभ्यत आत्मतत्त्वम्
साक्षाद् यथाऽमलदृशोः सवितृप्रकाशैः ॥११
भाः ११।३।४१

‡ कुतस्तत्कामयेति मुद्रित स्वामिटीका । १ । 'अश्रद्धया तत्राप्रवृत्तेरर्थात्' इति स्वामिटीका । २ । "रत्न" मुद्रित भागवते पाठः ।
३ । 'स्वस्वरूपेणे'ति मुद्रित स्वामिटीका । † स्वामिटीकैवानुसृता । * भक्तिरत्नावल्याम् २।१००+६।१९ ।

वित्तैषणादि विहाय केवलमञ्जनाभस्यैव चरणेच्छया या गुरुभक्तिः तया पुमान् चेतसो मलानि विधमेत् नाशयेत्। चेत एव वा कर्त्तः स्वगतानि मलानि तया भक्त्या क्षालयेत् तदा तस्मिन् विशुद्धे मनसि साक्षात् अव्यवधानेनात्मतत्वम् उपलभ्यते। अमलयोः दृशोः सत्योर्य्यथा पूर्व्वमेवसिद्धः सवितृप्रकाशः। † इत्यादि वचनानुसारेण तदेकशरणतयोत्तमया भक्त्यैव भगवद्‌गति- र्लभ्यते नान्यथेतिनिर्णीतम्।

इति भक्तिरत्नाकरे उत्तमभगवद्‌भक्तिनिरूपणम्

एकादश माहात्म्यम्॥

---

## द्वादश माहात्म्यम्

अथ भगवानुद्धवं प्रत्यन्तरङ्गां भक्तिमाह :—

समाहृत्य स्वयोगन्तु समस्तोपनिषद्रसम्।
सख्ये मुख्यतमां भक्तिं मुक्तौ पुनरुपादिशेत्॥१

भाः ११।२८।४५ श्रीधरटीकान्ते

स्वयोगमात्मयोगम्, समस्तोपनिषद्रस सारं समाहृत्य समुद्धृत्य सख्ये उद्धवाय कृष्णः समादिशत् मुख्यतमां सर्व्वत उत्कृष्टाम्।

तदेवाह :

मामेव सर्व्वभूतेषु वहिरन्तरपावृतम्।
ईक्षेतात्मनि चात्मानं यथा खममलाशयः॥२

भाः ११।२९।१२

सर्व्वभूतेष्वात्मनि च स्थितमात्मानमीश्वरं मामेवेक्षेत। कथमेकस्य सर्व्वेषु प्रवृत्तिस्तत्राह(१) :—वहिरन्तः पूर्णमित्यर्थः। तत् कुतः? अपावृतम् अनावरणम्। तदपि कुतः? यथा खम् असङ्गत्वादित्यर्थः। †

तत्साधनमाह :—

इति सर्व्वाणि भूतानि मद्‌भावेन महामते (२)।
सभाजयन्मन्यमानो ज्ञानं केवलमाश्रितः॥३

भाः ११।२९।१३

हे महामते,(३) अतिप्राज्ञ इत्यनेन प्रकारेण केवलं ज्ञानम् ज्ञानरूपां दृष्टिमाश्रितः सन् सर्व्वाणि भूतानि मद्‌भावेन मत्स्वरूपेण मन्यमानः सभाजयन् पण्डितो मत इत्युत्तरेणान्वयः।†

ननु उत्तमाधमेषु एकरूपेण सभाजयतमपाण्डित्य- मेव स्यात् पूज्यपूजादि व्यतिक्रमादित्याशङ्क्य तामेव ज्ञानदृष्टिं प्रपञ्चयति :—

ब्राह्मणे पुक्कशे स्तेने ब्रह्मण्येऽर्के स्फुलिङ्गके।
अक्रूरे क्रूरके चैव समदृक् पण्डितो मतः॥४

भाः ११।२९।१४

विषमेष्वपि समदृक् समं मामेव पश्यन्। वैषम्यमेव चतुर्द्धा दर्शयति :—ब्राह्मणे पुक्कशे इति जातितो वैषम्यम्। पुक्कसः अन्त्यजातिविशेषः। स्तेने ब्रह्मस्वहारिणि, ब्रह्मण्ये-ब्राह्मणेभ्यो दातरि इति कर्म्मतो वैषम्यम्। अर्के विस्फुलिङ्गे इति गुणतो वैषम्यम्। अक्रूरे शान्ते क्रूरके चेति स्वभाववैषम्यम्। तेषु समदृक् पश्यन् पण्डितो मत इति। †

---

† स्वामिटीकैवोद्धृता। १। वृत्तिरिति स्वामिटीका। २। महाम ते इति मुद्रित भागवते पाठः। ३। महाम ते इति मुद्रित [illegible]

अतोऽन्तर्य्यामीश्वरदृष्ट्या सर्व्वान् प्रणमेदित्याह :—

विसृज्य स्मयमानान् स्वान् दृशं व्रीडाञ्च दैहिकीम् ।
प्रणमेद्दण्डवद्भूमावाश्व चाण्डालगोखरम् ॥५

भाः ११।२६।१६

स्मयमानान् हसतः, स्वान् सखीन्, तथा दैहिकीं दृशम् अहमुत्तमः स तु नीच इति दृष्टिं तया दृशा या व्रीड़ा लज्जा ताञ्च विसृज्य श्व-चाण्डालादीन् अभिव्याप्य गोखरं दण्डवत् प्रणमेत् । †

एवं चतुर्भिः (१) श्लोकैरुक्तायाः समदृष्टेरवधिमाह-द्वाभ्याम् :—

यावत्सर्व्वेषुभूतेषु मद्भावो नोपजायते ।
तावदेवमुपासीत वाङ्मनःकायवृत्तिभिः ॥६

भाः ११।२६।१७

सर्व्वं ब्रह्मात्मकं तस्य विद्ययात्ममनीषया ।
परिपश्यन्नुपरमेत् सर्व्वतो मुक्तसंशयः ॥७

भाः ११।२६।१८

तस्यैवं कुर्व्वतः पुंसः सर्व्वं ब्रह्मात्मकमेव भवति, सर्व्वत्रैवेश्वरदृष्ट्या, या विद्या तया, परि परितः ब्रह्मैव पश्यन् सर्व्वतो मुक्तसंशयो भूत्वा क्रियामात्रादुपरमेत् । †

किमयमेवोपायोऽस्ति वान्योऽपि इत्यपेक्षायाम् सन्ति बहवः समीचीनस्त्वयमेवेत्याह :—

अयं हि सर्व्वकल्पानां सध्रीचीनो मतो मम ।
मद्भावः सर्व्वभूतेषु (२) मनोवाक्कायवृत्तिभिः ॥८

भाः ११।२६।१६

सर्व्वकल्पानामुपायानामयं सध्रीचीनः मुख्यतम-इति मम मतः सन्ति बहवो मोक्षमार्गाः समीचीनस्त्वयमेव नान्य इत्यस्य भगवद्धर्म्मलक्षणोपायस्य समीचीनत्वमेवोपपादयति द्वाभ्याम् :— †

नह्यङ्गोपक्रमे ध्वंसो मद्धर्म्मस्योद्धवाण्वपि ।
मया व्यवस्थितः(३) सम्यङ्निर्गुणत्वादनाशिषः ॥६

भाः ११।२६।२०

अङ्ग हे उद्धव, अनाशिषो निष्कामस्य मद्धर्म्मस्य उपक्रमे आरब्धे सति अन्वपि ईषदपि वैगुण्यादिभिः ध्वंसो नाशो नास्त्येव यतो मयैव निर्गुणत्वादयं धर्म्मः सम्यग् व्यवस्थितः(४) निश्चितः न तु मन्वादिमुखेन कथञ्चिदित्यर्थः । †

किञ्च—

यो यो मयि परे(५) धर्म्मः कल्पते निष्फलाय चेत् ।
तदायासो निरर्थः स्याद्भयादेरिव सत्तम ॥११

भाः ११।२६।२१

अयमर्थः :—किं वक्तव्यं मद्धर्म्मस्य न ध्वंस इति यतो लौकिकोऽपि यो यो निरर्थो व्यर्थ आयासः सोऽपि मयि परे निष्फलाय चेत् निष्कामतया समर्पितश्चेत् तर्हि धर्म्म एव स्यात् निरर्थकायासे दृष्टान्तः यथा भयशोकादेर्हेतोः पलायनक्रन्दनादिर्क्क्रोशस्तद्वत् । †

† स्वामिटीकानुसरणं कृतम् । १ । पञ्चभिरिति स्वामिटीका । २ । भूतानामिति (क) पुस्तके पाठः । 'मद्भाव इति यं सर्व्वभूतानां कायवृत्तिभिरिति' (ख) पुस्तके परार्द्धं पाठः । ३ । व्यवसित इति मुद्रित भागवते पाठः । ४ । व्यवसित इति मुद्रित स्वामिटीकायां पाठः । ५ । 'परो' इति (क) पुस्तके पाठः ।

ततो मद्भजनमेव बुद्धेर्विवेकस्य मनीषायाश्चातुर्य्यस्य च फलमित्याह :—

एषा बुद्धिमतां बुद्धिर्मनीषा च मनीषिणाम् ।
यत् सत्यमनृतेनेह मर्त्त्येनाप्नोति मामृतम् ॥१२

भाः ११।२९।२२

सत्यममृतञ्च मा माम् अनृतेनासत्येन मर्त्त्येन विनाशिना मनुष्यदेहेन इह अस्मिन्नेव जन्मनि प्राप्नोति यतः सैव(१) बुद्धिः मनीषाचेति। बुद्धिः विवेकः मनीषा चातुर्य्यम् ॥ इति भगवद् वचनानुसारेण तदेकशरणतया मुख्यतमया भक्त्यैव भगवत् प्राप्तिर्नान्यथेति निर्णीतम् ॥

इति भक्तिरत्नाकरे द्वादश माहात्म्यम् ।

## त्रयोदश माहात्म्यम्

इदानीं निर्गुणभक्तिर्निरूप्यते :—

तृतीये ऊनत्रिंशे देवहूतिंप्रति कपिलवाक्यम् :— वचनभेदात् सगुणभक्तेरेकाशीतिभेदाः। निर्गुणा तु भक्तिरेकविधैव, तामाह द्वाभ्याम् :—

मद् गुणश्रुतिमात्रेण मयि सर्व्वगुहाशये ।
मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ ॥१३

भाः ३।२९।११

लक्षणं भक्तियोगस्य निर्गुणस्याप्युदाहृतम् ।
अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे ॥१४

भाः ३।२९।१०

अविच्छिन्ना सन्तता। अहैतुकी फलानुसन्धान- शून्या। अव्यवहिता भेददर्शन शून्या च(२)। मद्गुणश्रुतिमात्रेण मयि पुरुषोत्तमे मनोगतिरिति या भक्तिः सा निर्गुणस्य भक्तियोगस्य लक्षणमित्यर्थः। लक्षणं स्वरूपम्। †

एकादशे पञ्चविंशे उद्धवं प्रति भगवद् वाक्यम् :—

इदानीमुक्तज्ञानकर्म्मादित्रैगुण्यस्य संसारहेतुत्वमनु- वदन् तन्निर्ज्जयान्मोक्ष इत्याह—सार्द्धेन :—

एताः संसृतयः पुंसो गुणकर्म्मनिबन्धनाः ।
येनेमे निर्जिताः सौम्य गुणा जीवेन चित्तजाः ॥१५

भाः ११।२५।३१

भक्तियोगेन मन्निष्ठो मद्भावायोपपद्यते ॥१६

भाः ११।२५।३२

येन निर्जिताः स पश्चादविच्छिन्नेन भक्तियोगेन मन्निष्ठःसन् मद्भावाय मोक्षाय उपपद्यते योग्यो भवति। †

तस्माद्विवेकिनामिदमेव युक्तमित्याह :—

तस्माद्देहमिमं लब्ध्वा ज्ञानविज्ञानसम्भवम् ।
गुणसङ्गं विनिर्धूय मां भजन्तु विचक्षणाः ॥१७

भाः ११।२५।३३

ज्ञानविज्ञानयोः सम्भवो यस्मिन् तमिमं नरदेहं प्राप्ताः गुणसङ्गं विहाय मामेव भजन्तु ।

प्रथमे अष्टमाध्याये कुन्तीवाक्यम् :—

मोहच्छेदे सति ततः किं स्यात् तदाह :—

१। सैव इति (क) पुस्तके पाठः। २। रहिता चेति मुद्रित स्वामिटीका। † स्वामिपादानुगत्या।

त्वयि मेऽनन्यविषया मतिर्मधुपतेऽसकृत् ।
रतिमुद्वहतादद्धा गङ्गेवौघमुदन्वति ॥१८

भाः १।८।४२

अनन्यविषया सती मे मम मतिः रतिमुद्वहतात् अनवच्छिन्नां प्रीतिं करोत्वित्यर्थः । ओघं प्रवं जलप्रवाहं प्रति यथा गङ्गा प्रतिबन्धं न गणयति एवं मतिरपि विघ्नान् न गणयत्विति भावः । †

एकादशे एकादशाध्याये(१) उद्धवं प्रति भगवद् वाक्यम् :—यस्मादेवम्भूतो मद् भजन प्रभावः तस्मात् ।

तस्मात्त्वमुद्धवोत्सृज्य नोदनां प्रतिनोदनाम् (२) ।
प्रवृत्तिञ्च निवृत्तिञ्च श्रोतव्यं श्रुतमेव च ॥१६

भाः ११।१२।१२

मामेकमेवशरणमात्मनं सर्व्व देहिनाम् ।
याहि सर्व्वात्मभावेन मया स्याः ह्यकुतोभयः ॥२०

भाः ११।१२।१३

तस्मात्त्वं नोदनां श्रुतिं प्रतिनोदनां स्मृतिञ्च ; यद्वा विधिं निषेधञ्च उत्सृज्य मां शरणं याहि मयैवेश्वरेण हेतुभूतेन अकुतोभयः स्याः भव ।

ततः सर्व्वगीतायाः सारमुद्धृत्य भगवानतिगुह्यतमादप्यतिगुह्यतमं प्राय प्रत्याह—

सर्व्वधर्म्मान् परित्यज्य मामेकं शरणं व्रज(३) ।
अहं त्वां सर्व्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥२१

गीः १८।६६

सर्व्वधर्म्मानिति टीका :—मद् भक्त्यैव सर्व्वं भविष्यतीति दृढ़विश्वासेन विधिकैङ्कर्य्यं त्यक्त्वा मदेकशरणो भव । एवं प्रवर्त्तमानः कर्म्मत्यागनिमित्तं पापं स्यादिति मा शुचः शोकं मा कार्षीः अतः त्वं मां शरणं व्रज याहि । मामेव शरणं कुरु । त्वामहं सर्व्वपापेभ्यो मोक्षयिष्यामि । † इत्यादि भगवद् वचनानुसारेण तदेकशरणतया निर्गुणभक्त्यैव भगवत् प्राप्तिर्नान्यथेति निर्णीतम् ।

इति भक्तिरत्नाकरे निर्गुणभक्तिनिरूपणं
त्रयोदश माहात्म्यम् ॥

---

## चतुर्द्दश माहात्म्यम्

इदानीं सप्रेमभक्तिमाह :—

एकादशे द्वितीये निमिंप्रति कवेर्व्वाक्यम् :—प्रथमं ज्ञानयोगकर्म्मयोगाद्युक्तौ एतदत्यन्ताशक्यमाशङ्क्याथ सुगमं मार्गमाह—

शृण्वन् सुभद्राणि रथाङ्गपाणे-
र्जन्मानि कर्म्माणि च यानि लोके ।
गीतानि नामानि तदर्थकानि
गायन् विलज्जो विचरेदसङ्गः ॥१ *

भाः ११।२।३७

तदर्थकानि तानि जन्मानि कर्म्माणि चार्थो येषां तानि एतानि साकल्येन ज्ञातुमशक्यानि इत्याभङ्ग्याह—

---

† स्वामिटीकैवानुसृता । १ । इदानीं मुद्रित पुस्तकेष्विमौ श्लोकौ द्वादशाध्याय एवोपलभ्येते । (२) मुद्रितभागवते टीकायाञ्च नोदनास्थाने चोदनेति पाठो गृहीतः । (३) आदर्शपुस्तके नायं श्लोको उद्धृतोऽस्ति, टीकामात्रमुद्धृतम् । * भक्तिरसामृतसिन्धावपि धृतः १।२२ ।

नामानि लोके गीतानि प्रसिद्धानि तानि शृण्वन् गायंश्च विचरेत् असङ्गः निस्पृहः । †

एवम्भूतस्य भक्तस्य संप्राप्तप्रेमलक्षणभक्तियोगस्य पुंसः लोकबाह्यातीतां गतिमाह :—

एवं व्रतः स्वप्रियनामकीर्त्या
जातानुरागो द्रुतचित्त उच्चैः ।
हसत्यथो रोदिति रौति गाय-
त्युन्मादवन्नृत्यति लोकबाह्यः * ॥२

भाः ११।२।३८

एवं व्रतं व्रतं यस्य सः स्वप्रियस्य हरेर्नामकीर्त्या जातोऽनुरागः प्रेमा यस्य सः । अतएव द्रुतचित्तः कदाचित् भक्तपराजितं भगवन्तमवकलय्य उच्चैर्हसति । एतावन्तं कालमुपेक्षितोऽस्मीति रोदिति । अत्यौत्सुक्याद्रौति क्रोशति । अतिहर्षेण गायति । जितं जितमिति नृत्यति । किं दाम्भिकवत् परान् प्रति प्रकाशयितुं, न उन्मादवत् ग्रहगृहीतवत् । लोकबाह्यः विवशः । †

न हि मुमुक्षारुढयोगिनामपि बहुजन्मभिर्दुर्लभा गतिः कथं नाम संकीर्तनमात्रेण एकस्मिन्नेव जन्मनि भवे-दित्याशङ्क्य सदृष्टान्तमाह :—

भक्तिः परेशानुभवो विरक्ति-
रन्यत्र चैष त्रिक एककालः ।
प्रपद्यमानस्य यथाश्नतःस्यु-
स्तुष्टिः पुष्टिः क्षुदपायोऽनुघासम् ॥३

भाः ११।२।४०

प्रपद्यमानस्य हरिं भजतः पुंसो भक्तिः प्रेमलक्षणा, परेशानुभवः प्रेमास्पद भगवद्रूपस्फूर्तिः तया निर्वृतस्य ततोऽन्यत्र गृहादिषु विरक्तिरित्येषः त्रिक एककाल भजनसमकाल एव स्यात् । यथाश्नतो भुञ्जानस्य तुष्टिः सुखं पुष्टिः उदरभरणं क्षुन्निवृत्तिश्च प्रतिग्रासं स्युः । उपलक्षणमेतत् प्रतिसिक्थमपि यथा स्युः तद्वत् । एवमेकैकस्मिन् भजने त्रितयं प्रेमादिविशिष्टे जायमानेऽनुवृत्त्या भजतः परमानन्दो भवति । बहुग्रासभोजिन (१) इव परमतुष्ट्यादि । †

तत्रैव प्रबुद्धवाक्यम् :—

एवं प्रवर्तमानानां परमानन्दप्राप्तिमाह द्वाभ्याम् :—

स्मरन्तः स्मारयन्तश्च मिथोऽघौघहरं हरिम् ।
भक्त्या सञ्जातया भक्त्या बिभ्रत्युत्पुलकां तनुम् ॥४

भाः ११।३।३१

भक्त्या साधारण (२) भक्त्या सञ्जातया प्रेमलक्षणया भक्त्या ।

क्वचिद्रुदन्त्यच्युतचिन्तया क्वचि-
द्धसन्ति नन्दन्ति वदन्त्यलौकिकाः ।
नृत्यन्ति गायन्त्यनुशीलयन्त्यजं
भवन्ति तूष्णीं परमेत्य निर्वृताः ॥५

भाः ११।३।३२

अजं हरिम् । अनुशीलयन्ति तच्चेष्टामनुकुर्वन्ति परमं तत्त्वं प्राप्य निर्वृताः सन्तः तूष्णीं भवन्ति । अलौकिकाः बाधः । †

---

† स्वामिटीकानुसृता । (१) भोजने इति मुद्रित स्वामिटीका । (२) साधन भक्त्येति मुद्रित स्वामिटीकायाम् मुद्रितम् ।

तत्र चतुर्दशे श्रीकृष्णवाक्यम् :—

किञ्च भक्तिः स्वाश्रयं पुनातीति किमु वक्तव्यम् कित्तु गद्गदवागादिलक्षणमद्भक्तियुक्तो लोकं सर्व्वं पुनातीत्याह :—

वाग्गद्गदा द्रवते यस्य चित्तं
रुदत्यभीक्ष्णं हसति क्वचिच्च ।
विलज्ज उद्गायति नृत्यति च
मद्भक्तियुक्तो भुवनं पुनाति ॥६
भाः ११।१४।२३

तत्र द्वादशे वृत्रादयो मुक्तिं प्राप्ता इत्युक्तम् । तत्र वृत्रादीनां भवतु नाम कथञ्चीत् साधनान्तरं गोपी प्रभृतीनान्तु नान्यदस्तीत्याह :—

केवलेन हि भावेन गावो गोप्यो नगा मृगाः ।
येऽन्ये मूढधियो नागाः सिद्धा मामीयुरञ्जसा ॥७ *
भाः ११।१२।७

सत्सङ्गलब्धेन केवलेनैव भावेन प्रीत्या नगाः यमलार्ज्जुनादयः नागाः कालीयादयः । सिद्धाः कृतार्थाः सन्तः ईयुः प्रापुः । †

तत्रैव पञ्चमे नारदवाक्यम् ;

एतदेव कैमुतिकन्यायेनाह :—

वैरेण यं नृपतयः शिशुपाल-पौण्ड्र-
शाल्वादयो गतिविलासविलोकनाद्यैः ।
ध्यायन्त आकृतिधियः शयनासनादौ
तत्साम्यमापुरनुरक्तधियां पुनःकिम् ॥८ *
भाः ११।५।४८

यं शयनासनादौ वैरेणापि ध्यायन्तः तस्य गतिविलासाद्यैराकृतिधियः तत्तदाकारा धीर्येषां ते तत् साम्यं सारूप्यमापुः । किं पुनर्व्वक्तव्यमनुरक्तधियां तत् साम्यं भवतीति । † इत्यादि वचनानुसारेण एकशरणतया साधारणमस्त्येव भगवत्प्राप्तिः सप्रेमभक्त्या पुनः किं वक्तव्यमिति निर्णीतम् ।

इति भक्तिरत्नाकरे सप्रेमभक्तिनिरूपणं
चतुर्दशमाहात्म्यम् ॥

---

## पञ्चदशमाहात्म्यम्

इदानी सगुण-निर्गुणभेदेन ज्ञानादीनां चातुर्व्विध्यमाह :—

कैवल्यं सात्त्विकं ज्ञानं रजो वैकल्पिकन्तु यत् ।
प्राकृतं तामसं ज्ञानं मन्निष्ठं निर्गुणं स्मृतम् ॥१
भाः ११।२५।२३

कैवल्यं देहादिव्यतिरिक्तात्मविषयम् । वैकल्पिकं देहादिविषयम् यत् तद्रजः राजसम् । प्राकृतं बालमूकादिविज्ञानतुल्यम् । मन्निष्ठं परमेश्वरविषयम् ॥ †

वनन्तु सात्त्विको वासः ग्रामो राजस उच्यते ।
तामसं द्यूतसदनं मन्निकेतन्तु निर्गुणम् ॥२
भाः ११।२५।२४

वनं विविक्तत्वात् सात्त्विको वासः । मन्निकेतन्तु साक्षात् मदाविर्भावात् (१) निर्गुणं स्थानम् । †

---

* ह॰ भक्तिरसामृतसिन्धौ १।१९, ११।१०४, ६।२० । † स्वामिकृतव्याख्यानमेवानुसृतम् । (१) भगवन्निकेतनन्तु साक्षात्तदाविर्भावादिति श्रीधर स्वामिचरणाः ।

सात्त्विकः कारकोऽसङ्गी रागान्धो राजसः स्मृतः ।
तामसः स्मृतिविभ्रष्टो निर्गुणो मदपाश्रयः ॥३

माः ११।२५।२५

कारकः कर्त्ता ; असङ्गी अनासक्तः ; रागान्धः अत्यामिनिवेशवान् (१) ; स्मृतिविभ्रष्टः अनुसन्धानशून्यः ; मदपाश्रयः मदेकशरणः स हि निरहङ्कारत्वान्निर्गुणः । †

सात्त्विक्याध्यात्मिकी श्रद्धा कर्म्मश्रद्धा तु राजसी ।
तामस्यधर्म्मे या श्रद्धा मत्सेवायान्तु निर्गुणा ॥४

माः ११।२५।२६

आध्यात्मिकी (२) देहादिव्यतिरिक्तात्मविषया । अधर्म्मे धर्म्म इति या श्रद्धा सा तामसी । †

पथ्यं पूतमनायस्तमाहार्य्यं सात्त्विकं स्मृतम् ।
राजसञ्चेन्द्रियप्रेष्ठं तामसं चार्त्तिदाशुचि ॥५

माः ११।२५।२७

पथ्यं हितं पूतं शुद्धम् अनायस्तम् अनायासतः प्राप्तम् आहार्य्यं भक्ष्यभोज्यादि । इन्द्रियाणां प्रेष्ठं भोगकाले सुखकरं कट्वम्ललवणादि । आर्त्तिदाशुचि दैन्यकरमशुद्धञ्च । च शब्दात् मन्निवेदितं तु निर्गुण-मित्यभिप्रेतम् । †

सात्त्विकं सुखमात्मोत्थं विषयोत्थं तु राजसम् ।
तामसं मोहदैन्योत्थं निर्गुणं मदपाश्रयम् ॥६

माः ११।२५।२८

आत्मोत्थं सुखं मदपाश्रयमित्यपि तत्त्वम् तत् यथार्थविषयत्वेन ज्ञानवदेव द्रष्टव्यम् । †

देहाद्युत्क्रान्तिकालिनगुणोत्कर्षफलमाह :—

सत्त्वे प्रलीनाः स्वर्यान्ति नरलोकं रजोलयाः ।
तमोलयास्तु निरयं यान्ति मामेव निर्गुणाः ॥७

माः ११।२५।२२

सत्त्वे प्रवृद्धे सति प्रलीनाः मृताः ; रजोलयाः रजसि प्रवृद्धे सति लयो येषां ते एवं तमोलया इत्यपि । निर्गुणा इत्यत्र तु लयशब्दानुपादानात् जीवन्तोऽपि निर्गुणाश्चेत् मामेव यान्तीत्यर्थः । †

कर्म्मणां त्रैविध्यमाह :—

मदर्पणं निष्फलं वा सात्त्विकं निजकर्म्म तत् ।
राजसं फलसङ्कल्पं हिंसाप्रायादितामसम् ॥८

माः ११।२५।२२

मदर्पणं मत्प्रीत्युद्देशेन कृतं निष्फलं केवलं दासभावेन कृतं यन्निजं कर्म्म नित्यादि तत् सात्त्विकम् । फलं सङ्कल्प्यते यस्मिन् तत् । हिंसाप्रायं हिंसो-द्देशेन कृतं हिंसाबहुलञ्च आदिशब्दात् [illegible]-विभिः कृतञ्च । †

प्रकरणार्थमुपसंहरति :—

गुणकृता गुणसंसरणव्यथा-
मजितपुन्यकथा कथनादिभिः ।
धुनुत भक्तिरसेन विवेकिनो
नहि पुनः सुलभं मनुरीदृशं ॥९

माः ११।१५।३५ श्रीधरस्वामिटीकायाम् ।

इत्यादि भगवद् वचनानुसारेण त्रयोदशप्रकारा गुणमयं परित्यज्य भगवत् कथायाः [illegible]-नादिरसेन संसारक्लेशोपशान्तिः नान्यथेति निर्णीतम् ।

इति भक्तिरत्नाकरे ज्ञानादिविभागनिरूपणं पञ्चदशमाहात्म्यम् ॥

(१) असक्त्येति त्रुटित स्वामिटीका । (२) सात्त्विकी देहादिव्यतिरिक्तात्मविषयेति स्वामिटीका । † स्वामिटीका [illegible]

न यस्य स्वः पर इति वित्तेष्वात्मनि वा भिदा ।
सर्व्वभूतसमः शान्तः स वै भागवतोत्तमः ॥६

भाः ११।२।५०

वित्तेषु स्वीयं परकीयमिति । आत्मनि स्वः पर इति ।

किञ्च—

त्रिभुवनविभवहेतवेऽप्यकुण्ठस्मृति-
रजितात्मसुरादिभिर्विमृग्यात् ।
न चलति भगवत्पदारविन्दाल्लव-
निमिषार्द्धमपि स वैष्णवाग्र्यः ॥७

भाः ११।२।५१

त्रिभुवनविभवहेतवेऽपि त्रैलोक्यराज्यार्थमपि लवार्द्धमपि निमिषार्द्धमपि भगवत् पदारविन्द भजनाद् यो न चलति स वैष्णवाग्र्यः । ननु, लवार्द्ध निमिषार्द्ध मात्रभजनोपरमे चेत्तावल्लाभो भवेत् तत्कुतो न चलेत् ? तत्राह :— अकुण्ठस्मृतिः भगवत्पदतोऽन्यत् सारं नास्तीत्येवंरूपा अकुण्ठा अनपगता स्मृतिर्यस्य सः । भगवत् पदारविन्दा-दन्यत् सारं नास्तीति कुतः ? अत आह अजिते हरावेव चेतो येषां तथाभूतैः सुरादिभिरपि दुर्लभात् । किन्तु केवलं विमृग्यात् तदपेक्षया सर्व्वस्य तुच्छत्वं स्मरन् यो न चलतीत्यर्थः । †

अपि च विषयाभिसन्धिना च नृणां (१) कामेनाति-सन्तापे सति चलनं भवेद् स तु भगवत्सेवा मिवृंत्तौ न सम्भवतीत्याह :—

भगवत उरुविक्रमाङ्घ्रिशाखानख-
मणिचन्द्रिकया निरस्ततापे ।
हृदि कथमुपसीदतां पुनः सः
प्रभवति चन्द्र इवोदितेऽर्कतापः ॥८

भाः ११।२।५२

उरुविक्रमो च तावङ्घ्री च तयोः शाखाः अङ्गुलयः तासु नखानि तान्येव मणयस्तेषां चन्द्रिका शीतला दीप्तिः तया निरस्तः कामादितापः यस्मिन् तस्मिन् उपसीदतां भजतां हृदि कथं पुनः स तापः प्रभवति । चन्द्रे उदिते सति अर्कस्य ताप इव । न यस्य स्वः पर इत्यादि श्लोक-त्रयेण यादृश इत्यस्योत्तरमुक्तं वेदितव्यं यद्वुत इत्यस्य च हरिनामानीति ज्ञातव्यम् । †

उक्तसमस्तलक्षणसारमाह :—

विसृजति हृदयं न यस्य साक्षा-
द्धरिरवशाभिहितोऽप्यघौघनाशः ।
प्रणयरशनया धृताङ्घ्रिपद्मः
स भवति भागवतप्रधान उक्तः ॥९

भाः ११।२।५३

हरिरेव स्वयं साक्षाद् यस्य हृदयं न विसृजति न मुञ्चति । कथम्भूतः ? अवशेनापि अभिहितमात्रोऽपि । अघौघं नाशयति यः सः । तत् किं न विसृजति [illegible] प्रणयरशनया धृतं हृदयेन (२) बद्धमङ्घ्रि [illegible] भागवतप्रधान उक्तो भवति । †

तथा चतुर्द्दशाध्याये उद्धवंप्रति भगवद्वाक्यम् :—

अन्येषां तत्तल्लोकादि परिच्छिन्नं सुखं भक्तस्य तु परिपूर्णमित्याह :—

(१) [illegible] इति मुद्रित स्वामिटीकायां पाठः । (२) [illegible]
पद्ममिति मुद्रित स्वामिटीका । † श्रीधरस्वामिटीकानुसारा ।

अकिञ्चनस्य दान्तस्य शान्तस्य समचेतसः।
मया सन्तुष्टमनसः सर्व्वाः सुखमया दिशः ॥१० *

भाः ११।१४।१२

परिपूर्णतामेवाह :—

न पारमेष्ठ्यं न महेन्द्रधिष्ण्यं
न सार्व्वभौमं न रसाधिपत्यम्।
न योगसिद्धीरपुनर्भवं वा
मय्यर्पितात्मेच्छति मद्विनान्यत् ॥११ *

भाः ११।१४।१३

रसाधिपत्यं पातालादिस्वाम्यं; अपुनर्भवं मोक्षमपि; पारमेष्ठ्यं ब्रह्मणः पदम्; मद्विना मां हित्वा अन्यन्नेच्छति। अहमेव तस्य प्रेष्ठ इत्यर्थः। †

ममापि स एव प्रेष्ठ इत्याह द्वाभ्याम् :—

न तथा मे प्रियतम आत्मयोनिर्नशङ्करः।
न च सङ्कर्षणो न श्री नैंवात्मा च यथा भवान्।

भाः ११।१४।१४

आत्मयोनिर्ब्रह्मा पुत्रोऽपि; शङ्करः मत्स्वरूपभूतोऽपि; सङ्कर्षणो भ्रातापि; श्रीर्भार्य्यापि; आत्मा मन्मूर्त्तिरपि; यथा भक्त इति वक्तव्येऽतिहर्षेणाह—भवानिति। †

निरपेक्षं मुनिं शान्तं निर्व्वैरं समदर्शनम्।
अनुव्रजाम्यहंनित्यं पूयेयेत्यङ्घ्रिरेणुभिः ॥१२

भाः ११।१४।१५

पूयेयेति भवन्त्सर्व्वान्त्रिब्रह्माण्डानि पवित्रीकुर्य्यामिति भावेनेत्यर्थः। †

किञ्च, मद्भक्तानां सुखमेतावदेवंभूतमिति वा को वक्तुं समर्थः? यतः असंवेद्यं निरुपममित्याह :—

निष्किञ्चना मय्यनुरक्तचेतसः
शान्ता महान्तोऽखिलजीववत्सलाः।
कामैरनालब्धधियो जुषन्ति ते
यन्नैरपेक्ष्यं न विदुः सुखं मम ॥१४

भाः ११।१४।१६

महान्तो निरभिमानाः; अनालब्धधियः असंस्पृष्टचित्ताः; निष्किञ्चनत्वादीनां यथेष्टं हेतुहेतुमद्भावः। एवम्भूता मम मदीयाः यत् सुखं जुषन्ति सेवन्ते तत् सुखं त एव विदुर्नान्ये। कुतो नैरपेक्ष्यं नास्त्यपेक्षनीयं येषां ते निरपेक्षास्तैरेव लभ्यं न तु मोक्षापेक्षैरपीत्यर्थः। यद्वा, एवम्भूताः सन्तो ये मम मामित्यर्थः जुषन्ति प्रीणयन्ति त एव यन्नैरपेक्ष्यं सुखं तद्विदुर्नान्ये इत्यर्थः (१)।

पञ्चमे चतुर्द्दशे भरतप्रशंसायाम् :—

यो दुस्त्यजान् दारसुतान् सुहृद्राज्यं हृदिस्पृशः।
जहौ युवैव मलवदुत्तमश्लोकलालसः ॥१५

भाः ५।१४।४२

युवेव तरुण एव दारादीन् मलवत् विष्ठामिव यो जहौ तस्य भरतस्य चरितम्।

तत्रैव प्रथमे :—ननु गृह एव वर्त्तमानस्य भोगां भुञ्जानस्य कुतोऽभिमानाभावो मोक्षो वा? अतस्तत्त्यागेन वनयात एव मुक्तः तमाह :—

† स्वामिचरणव्याख्यानमेवानुसृता। * भक्तिरत्नाकरस्यापि ६।१२७-६।१२८ (१) इत्थंभूत इति श्रुतिः स्वामिटीका।

भयं प्रमत्तस्य वनेष्वपि स्याद्
यतः स आस्ते सहषट्सपत्नः ।
जितेन्द्रियस्यात्मरतेर्बुधस्य
गृहाश्रमः किं नु करोत्यवद्यम् ॥
भाः ५।१।१७

भयं संसारः स्यादेव । प्रमत्तस्य अजितेन्द्रियस्य । वनेष्वपि (१) सङ्गतिभया (२) वनाद्वनान्तरं गच्छतोऽपि । सहैव षट् सपत्नाः शत्रवो मनोबुद्धीन्द्रियाणि च यस्य स तथाभूत एव वनेष्वपि यत आस्ते । बुधत्वेन जितेन्द्रियत्वात् आत्मारामस्य अवद्यं रागादिदोषः । †

प्रथमे सप्तमाध्याये शौनकादीन्प्रति सूतवाक्यम् :—

आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे ।
कुर्व्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः ॥१७ *
भाः १।७।१०

निर्ग्रन्थाः ग्रन्थेभ्यो निर्गताः । तदुक्तम् (३)
यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।
तदा गन्तासि निर्व्वेदं श्रोतव्यस्य श्रुतस्य च ॥ गीः २

यद्वा, ग्रन्थिरेव ग्रन्थः (४) निवृत्तहृदयग्रन्थयः । ननु मुक्तानां किं भक्त्येति सर्व्वाक्षेप परिहारार्थमाह :— इत्थम्भूत गुण इति । †

तत्र प्रथमे विदुरं प्रति युधिष्ठिरवाक्यम् :— भवताम्र तीर्थाटनं न स्वार्थं किन्तु तीर्थानुग्रहार्थमेवेत्याह—

भवद्विधा भागवता तीर्थभूताः स्वयं विभो ।
तीर्थी कुर्व्वन्ति तीर्थानि स्वान्तस्थेन गदाभृता ॥१८
भाः १।१३।१८

मलिनजनसम्पर्केण तीर्थस्य तीर्थानि मलिनानि भवन्ति सन्तः पुनः स्वयं तीर्थी कुर्व्वन्ति । स्वान्तं मनः तत्रस्थेन स्वस्यान्तःस्थितेन वा । †

तत्राष्टादशे राजाचेत् प्रतिशापं दद्यात् तर्हि निष्कृतिर्भवेत् । तत्तु न सम्भवति तस्य महाभागवतत्वादित्याह :—

तिरस्कृता विप्रलब्धाः शप्ताः क्षिप्ता हता अपि ।
नास्य तत् प्रतिकुर्व्वन्ति तद्भक्ताः प्रभवोऽपि हि ॥१९
भाः १।१८।४७

तिरस्कृता निन्दिता, विप्रलब्धाः वञ्चिताः, क्षिप्ता अवज्ञाताः, हता ताड़िताः ; अस्य तिरस्कारादिकर्त्तुः न प्रतीकारं कुर्व्वन्ति । तद्भक्ताः विष्णुभक्ताः प्रभवः समर्था अपि । † युक्तञ्चैतदित्याह—

प्रायशः साधवो लोके परैर्द्वन्द्वेषु योजिताः ।
न व्यथन्ति न हृष्यन्ति यत आत्माऽगुणाश्रयः ॥२०
भाः १।१८।४८

द्वन्द्वेषु सुखदुःखादिषु अगुणाश्रयः गुणातीताश्रयो न भवति । † इत्यादि वचनानुसारेण एकशरणतया साधारण भक्त्यैव मुक्तिः साध्यते किं पुनरुत्तम भक्त्येति निर्णीतम् ।

---

इति भक्तिरत्नाकरे उत्तमभक्तलक्षणनिरूपणं नाम षोडशं माहात्म्यम् ॥१५॥

---

(१) वनेष्विति इति मुद्रित स्वामिटीका । (२) सङ्गभिया इति मुद्रित स्वामिटीका । ३ । तदुक्तं गीतास्विति मुद्रित स्वामिटीका (४) [illegible] ते इत्यधिकं मुद्रित स्वामिटीकायां पाठः । † स्वामिव्याख्यानम् [illegible]
* [illegible] २।१२०७

# सप्तदशमाहात्म्यम्

अथ मध्यमभक्तमाहात्म्यं कथ्यते। एकादशे द्वितीयाध्याये हवेर्वाक्यम् :—

ईश्वरे तदधीनेषु वालिशेषु द्विषत्सु वा।
प्रेममैत्रीकृपोपेक्षा यः करोति स मध्यमः ॥१

भाः ११।२।४६

प्रेम च मैत्री च कृपा च उपेक्षा च ताः ईश्वरादिषु चतुर्षु यः करोति स मध्यमो भागवतः एवम्भूतस्य भेदस्य दर्शनात्। †

तत्रैव तृतीयाध्याये :—

सर्व्वतो मनसोऽसङ्गमादौ सङ्गञ्च साधुषु।
दयां मैत्रीं प्रश्रयञ्च भूतेष्वद्धा यथोचितम् ॥२

भाः ११।३।२४

यथोचितमिति हीनेषु दयां समेषु मैत्रीं उत्तमेषु प्रश्रयञ्च शिक्षेदित्यर्थः। †

चतुर्थस्कन्धेऽष्टमाध्याये ध्रुवं प्रति नारदवाक्यम् :—

गुणाधिकान्मुदं लिप्सेदनुक्रोशं गुणाधमात्।
मैत्रीं समानादन्विच्छेन्नतापैरभिभूयते ॥३

भाः ४।८।३४

गुणाधिकात् पुंस इति ल्यब्लोपे पञ्चमी। तं दृष्ट्वा प्रीतिं कुर्य्यात् न त्वसूयामित्यर्थः। अनुक्रोशं कृपां लिप्सेत् न तु तिरस्कारं समानात् मैत्रीं न तु स्पर्द्धाम्। †

तृतीयस्कन्धे कपिलवाक्यम् :—

अथ मां सर्व्वभूतेषु भूतात्मानं (१) कृतालयम्।
अर्हयेद्दानमानाभ्यां मैत्र्याभिन्नेन चक्षुषा ॥४

भाः ३।२९।२२

अन्तर्य्यामीश्वरदृष्ट्या चतुर्व्विधेषु यथायोग्येन चतुर्भिः प्रकारैः मां पूजयेत्। इत्यादि वचनानुसारेण एकशरणतया एवम्विधभक्तियोगेन भगवत्प्राप्तिर्नान्यथेति नीर्णितम्।

इति भक्तिरत्नाकरे मध्यमभक्तलक्षणं नाम सप्तदशं माहात्म्यम् ॥१६॥

---

# अष्टादशमाहात्म्यम्

अथेदानीं प्राकृत भक्तमाहात्म्यं कथयति। एकादशे द्वितीयाध्याये निमिं प्रति हवेर्वाक्यम् :—

अर्च्चायामेव हरये पूजां यः श्रद्धयेहते।
न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः ॥१

भाः ११।२।४७

अर्च्चायां प्रतिमायां पूजामीहते करोति तु तद्भक्तेषु अन्येषु च सुतरां न करोति स प्राकृतः प्रकृतिप्रारब्धः; अधुनैव प्राकृतभक्तः (२) सन् शनैरुत्तमो भविष्यतीत्यर्थः। †

तत्र चतुर्दशाध्याये उद्धवं प्रति भगवद्वाक्यम् :—

---

† स्वामिव्याख्यानमेवानुसृतम्। (१) भूतात्मानम् कृतालयम् इति मुद्रित भागवते पाठः। (२) प्रारब्धभक्तिः सन् इति मुद्रित स्वामिटीकायाम्। † स्वामिटीकैवोद्धृता।

अपिचास्तां तावदुत्तमभक्तकथा यतः प्राकृतोऽपि कृतार्थ एवेत्याह द्वाभ्याम् :—

बाध्यमानोऽपि मद्भक्तो विषयैरजितेन्द्रियः ।
प्रायः प्रगल्भया भक्त्या विषयैर्नाभिभूयते ॥२ *

भाः ११।१४।१७

विषयैर्बाध्यमानोऽपि आकृष्यमाणोऽपि प्रगल्भया समर्थया । †

यथाग्निः सुसमिद्धार्च्चिः करोत्येधांसि भस्मसात् ।
तथा मद्विषया भक्तिरुद्धवैनांसि कृत्स्नशः ॥३ *

भाः ११।१४।१८

पाकाद्यर्थं प्रज्ज्वालितोऽप्यग्निः यथा काष्ठानि भस्मसात् करोति तथा रागादिनाकृष्यमाणोऽपि कथञ्चित् मद्विषया सती भक्तिः समस्तपापानीति भगवानपि स्वभक्तिमहिमाश्चर्य्येण सम्बोधयति अहो उद्धव विस्मय शृण्विति । †

प्रथमस्कन्धे पञ्चमाध्याये व्यासं प्रति नारदवाक्यम्—

एवं तावत् काम्यकर्म्मादेरनर्थहेतुत्वात् तद्विहाय हरेर्लीलैव वर्णनीयेत्युक्तम् ; इदानीन्तु नित्यनैमित्तिकस्वधर्म्मनिष्ठामप्यनादृत्य केवलं हरिभक्तिरेवोपदेष्टव्येत्याशयेनाहः—

त्यक्त्वा स्वधर्म्मं चरणाम्बुजं हरेः
भजन्नपक्वोऽथ पतेत्ततो यदि ।
यत्र क्व वा भद्रमभूदमुष्य किं
को वार्थ आप्तो भजतां स्वधर्म्मतः ॥४ *

भाः १।५।१७

ननु स्वधर्म्मत्यागेन भजन् भक्तिपरिपाकेन यदि कृतार्थो भवेत् तदा न काचित् चिन्ता । यदि पुनरपक्व एव म्रियेत ततो भ्रश्येद्वा तदा स्वधर्म्मत्यागनिमित्तोऽनर्थः स्यादित्याशङ्क्याह ततो भजनात् पतेत् कथञ्चित् भ्रश्येत् म्रियेत वा यदि तथापि भक्तिरसिकस्य कर्म्मानधिकाराज्ञानर्थशङ्का । अङ्गीकृत्याप्याह :—वा शब्दः कटाक्षे । यत्र क्व वा नीचयोनावपि अमुष्य भक्तिरसिकस्य किमभद्रमभूत् नाभूदेवेत्यर्थः । भक्तिवासनासद्भावादिति भावः । अभजद्भिस्तु केवलं स्वधर्म्मतः को वार्थः आप्तः प्राप्तः । †

यदुक्तं यत्र क्व वा भद्रमभूदिति तदुपपादयति :—

न वै जनो जातु कथञ्चनाव्रजेत्
मुकुन्द सेव्यन्यवदङ्ग संसृतिम् ।
स्मरन्मुकुन्दाङ्घ्र्युपगूहनं पुन-
र्विहातुमिच्छेन्न रसग्रहो यतः ॥५

भाः १।५।१९

मुकुन्दसेवी जनः, जातु कदाचित्, कथञ्चन कुयोनिगतोऽपि संसृतिं नाव्रजेत् नाविशेत् । अङ्ग अहो अन्यवत् केवलकर्म्मनिष्ठवदिति वैधर्म्ये दृष्टान्तः । कुत इत्यत आह मुकुन्दाङ्घ्र्युपगूहनम् आलिङ्गनं पुनः पुनः स्मरन् विहातुं नेच्छेत् यतो अयं जनो रसग्रहो रसेन रसनीयेन गृह्यते वशीक्रियते । यद्वा रसनीये ग्रह आग्रहो यस्य तदुक्तं भगवता :—

यतते च ततो भूयः संसिद्धौ कुरुनन्दन ।
पूर्व्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः ॥ †

गीः ६।४३

* भक्तिरत्नावल्यामपि १।८३+१।८६+७।२६ † स्वामिटीकैवानुसृता ।

तत्र षष्ठे हरिचर्य्यानुवर्णनं यदेतदेवेत्युक्तमवधारणमनुभवेन दर्शयति :—

यमादिभिर्योगपथैः कामलोभहतो मुहुः ।
मुकुन्दसेवया यद्वत्तथात्माद्धा(१) न शाम्यति ॥६ *

भाः १।६।३५

यमादिभिः तथा न शाम्यति यद्वन्मुकुन्द सेवया। अद्धा साक्षात् आत्मा मनः शाम्यति। कथञ्चिन्मुकुन्दसेवामात्रेण शाम्यति किं पुनस्तद्गुणवर्णनेनेति भावः। †

षष्ठे प्रथमाध्याये शुकवाक्ये भक्तिः स्वल्पापि पुनातीत्याह :—

सकृन्मनः कृष्णपदारविन्दयोः
निवेशितं तद्गुणरागि यैरिह ।
न ते यमं पाशभृतश्च तद्भटान्
स्वप्नेऽपि पश्यन्ति हि चीर्णनिष्कृताः ॥७ *

भाः ६।१।१७

तस्य गुणेषु रागमात्रमस्ति न तु ज्ञानं यस्य तन्मनः कृष्णपदारविन्दयोः यैर्निवेशितं सकृदपि ते यमं यमदूतांश्च स्वप्नेऽपि न पश्यन्ति यतः चीर्णनिष्कृताः कृतप्रायश्चित्ताः। †

दशमस्कन्धे ब्रह्मणः स्तुतौ—ननु वीतरागादिदोषाणां सन्यासिनामपि न मत्तः परं किञ्चिदस्ति कथमेषामपर्य्याप्तमित्यत आह—

तावद्रागादयः स्तेनास्तावत् कारागृहं गृहं ।
तावन्मोहोऽङ्घ्रिनिगडो यावत् कृष्ण न ते जनाः ॥८ *

भाः १०।१४।३६

हे कृष्ण रागादयस्तावदेव स्तेनाः चौरा भवन्ति, तथा तावद्गृहमपि कारागृहं बन्धनागारं, मोहोऽपि तावदेवाङ्घ्रिनिगडः पादशृङ्खलः यावत्ते त्वदीयजनाः न भवन्ति, त्वदीयानान्तु रागादयोऽपि त्वन्निष्ठत्वेन मोचका एवेति न यतिभ्यो विशेषः, भजनन्त्वधिकमितिभावः। †

इत्यादिवचनानुसारेण तदेकशरणतया विषयासक्तभक्तोऽपि मुक्तिमाप्नोति किं पुनरुत्तमभक्तोऽपीतिनिर्णीतम्।

इति भक्तिरत्नाकरे प्राकृतभक्तमाहात्म्यं
नाम अष्टादशमाहात्म्यम्।

## ऊनविंशंमाहात्म्यम्

अथ आचारभ्रष्टभक्तमाहात्म्यमाह—

भगवद्गीतायां नवमाध्याये अर्जुनं प्रति भगवद्वाक्यम्। मद्भक्तेरवितर्क्यप्रभाव इति दर्शयन्नाह—

अपि चेत् सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥१

गीः ९।३०

सु सुष्ठु अत्यन्तं दुराचारोऽपि यदि पृथक्त्वेन देवतान्तरभक्तिमकुर्व्वन्(२) मामेव परमेश्वरं भजते तर्हि साधुः श्रेष्ठ एव मन्तव्यः, यतोऽसौ सम्यग्व्यवसितः शोभनमध्यवसायं कृतवान्। ननु कथं समीचीनाध्यवसायमात्रेन साधुर्म्मन्तव्यस्तत्राह—

* भक्तिरत्नावल्यामपि १।१८+१०।२ † स्वामिटीकैवानुसृता। (१) तथाद्धात्मेति मुद्रित भागवते पाठः। (२) अनन्यभाक्पृथक्त्वेन पृथक् देवतापि वासुदेव एवेतिबुद्ध्या देवतान्तरभक्तिं कुर्व्वन् मामेव इति स्वामिटीकायां पाठान्तरम्।

क्षिप्रं भवति धर्म्मात्मा शश्वत्शान्तिं निगच्छति।
कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥२

गीः ९।३१

सुदुराचारोऽपि मां भजन् शीघ्रं भवति धर्म्मचित्तः अतः शश्वत्शान्तिं चित्तोपप्लवोपरमरूपां परमेश्वरनिष्ठां नितरां गच्छति प्राप्नोति। कुतर्ककर्कशवादिनो नैतन्मन्येरन्निति शङ्काकुलमर्ज्जुनं प्रोत्साहयति हे कौन्तेयेति। पटह-काहलादि महाघोषपूर्व्वकं विवदमानानां सभां गत्वा वाहुमुत्क्षिप्य निःशङ्कं प्रतिज्ञां कुरु, कथं? मे मम परमेश्वरस्य दुराचारो भक्तोऽपि न प्रणश्यति अपितु कृतार्थो भवत्येवेति। ततश्चैते प्रौढ़िविजृम्भात् विध्वंशितकुतर्काः तदानीं निःसंशयं त्वामेव गुरुत्वेनाश्रयेरन्निति भावः। †

आचारभ्रष्टं मद्भक्तिः पवित्रीकरोतीति किमत्र चित्रं, यतो मद्भक्तिः दुष्कुलानपि अनधिकारिणीऽपि संसारान्मोचयतीत्याह—

मां हि पार्थ! व्यपाश्रित्य येऽपि स्युः पापयोनयः।
स्त्रियो वैश्यास्तथाशूद्राः तेऽपि यान्ति परां गतिम् ॥३

गीः ९।३२

येऽपि पापयोनयः स्युः निकृष्टजन्मनः अन्त्यजातयः येऽपि वैश्याः केवल कृष्यादिनिरताः अतः स्त्रियः शूद्रा अपि अध्ययनादिरहिताः तेऽपि मां व्यपाश्रित्य संसेव्य परां गतिं यान्ति, हि निश्चितं। यदेवं तदा सत्कुलाः सदाचाराश्च मद्भक्ताः परां गतिं यान्तीति किं वक्तव्यमित्याह— †

किं पुनर्ब्राह्मणाः पूण्या भक्ता राजर्षयस्तथा।
अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ॥४

गीः ९।३३

पूण्याः सुकृतिनो ब्राह्मणाः, तथा राजानश्च ते ऋषयश्चेति एवम्भूताः परां गतिं यान्तीति किं वक्तव्यं, अतस्त्वं राजर्षिरूपं देहं प्राप्य लब्ध्वा मां भजस्व, किञ्च अनित्यमध्रुवं असुखं सुखरहितं इमं मर्त्यलोकं क्षणिकं प्राप्य क्षणिकत्वाद् विलम्बमकुर्व्वन् असुखत्वाच्च सुखार्थोद्यमं हित्वा मामेव भजस्वेत्यर्थः। †

अध्यायार्थमुपसंहृत्य टीकाकारेण दर्शितम्।
निजमैश्वर्य्यमाश्चर्य्यं भक्तेश्चाद्भुतवैभवम्।
नवमे राजगुह्याख्ये कृपयाबोचदच्युतः ॥५

गीः श्रीधरीटीका ९।३४

एकादशे चतुर्दशाध्याये उद्धवं प्रति भगवद्वाक्यम्।

भक्त्याहमेकयाग्राह्यः श्रद्धयात्मा प्रियः सताम्।
भक्तिः पुनाति मन्निष्ठा श्वपाकानपि सम्भवात् ॥६ *

भाः ११।१४।२०

श्रद्धया या भक्तिस्तया सम्भवात् जातिदोषादपीत्यर्थः। †

षष्ठे प्रथमाध्याये एतच्च ज्ञानमार्गादपि श्रेष्ठमित्याह—

न तथाह्यघवान् राजन् पूयेत तपआदिभिः।
यथा कृष्णार्पितप्राणास्तत्पुरुषनिषेवया ॥७

भाः ६।१।१६

† स्वामिटीकैवानुसृता। * भक्तिरत्नावल्यामपि १।८८

न तथा पूयेत न शुद्धोत तत्पुरुषमिषवया श्रीकृष्णे अर्पिताः प्राणा येन ।

षष्ठस्कन्धटीकायां—

अध्यायैकोनविंशत्या षष्ठे पोषणमुच्यते ।
अभिलङ्घितमर्य्यादभक्तरक्षणलक्षणम् ॥८

भाः श्रीधरीटीका ६।१।१

अजामिलो मनुष्येषु महापापो यथोचितः ।
विश्वरूपादिघाती च यथा देवेषु वासवः ॥९

भाः श्रीधरीटीका ६।१।१

अजामिलस्य भक्तत्वं विष्णुदूतैर्निरुपितं ।
संकेतभगवन्नाम पुत्रस्नेहानुसङ्गजम् ॥१०

भाः श्रीधरीटीका ६।१।१

इन्द्रोऽपि भगवद्भक्तः सख्येनोपेन्द्रसेवकः ।
यदधीनसुरैश्वर्य्यशत्रुनिर्जयजीवितः ॥११

भाः श्रीधरीटीका ६।१।१

नरसिंहपुराणे यमस्यवाक्यम्—

भगवति च हरावनन्यचेता ।
भृशमलिनोऽपि विराजते मनुष्यः ।
नहि शशिकलुषच्छविः कदाचित्
तिमिरपराभवतामुपैति चन्द्रः ॥१२

नृसिंहपुराणे ६।५

नान्यस्मिन् देवतान्तरे चेतोऽन्तःकरणं यस्य सः भगवति वासुदेवे अनन्यचेता अव्यभिचारिभक्तिमान् मनुष्य इति अनधिकारिविशेषणम् । भृशं मलिनोऽपि महापातक्यपि पापमभिभूय विराजते प्रकाशते, पापैर्नलिप्यत इत्यर्थः । दृष्टान्तेनाह, नहीति—, सएव कलुषं पापं तस्य छविर्यत्र सः चन्द्रः तिमिरपराभवतां न याति, अपि तु तिमिरं पराभवमेव करोति ।

इति घोषयते यमः स दुन्दुभि
गमयति सर्व्वदिशां स युग्मताडिताम् ।
यमदूता वहवश्चित्रगुप्त
शृणु मृत्योः परिहर विष्णोर्भक्तान् ॥१३

नरसिंहपुराणे ६।६

एकादशे निमिं प्रति करभाजनवाक्यम् ।

भक्तस्य विधिनिषेधनिवृत्तेः कृतकृत्यतामाह द्वाभ्याम् ।

*देवर्षिभूताप्तनृणां पितॄणां
न किङ्करो नायमृणी च राजन् ।
सर्व्वात्मना यः शरणं शरण्यं
गतो मुकुन्दं परिहृत्य कर्त्तम् ॥१४ *

भाः ११।५।४१

आप्ताः पोष्याः कुटुम्बिन इतरे देवादयः पञ्चयज्ञदेवताः एतेषां यथा अभक्तः ऋणी, अतएव तेषां किङ्करः तदर्थं नित्यं पञ्चयज्ञादिकर्त्ता, अयन्तु न तथा कोऽसौ ? यः सर्व्वभावेन मुकुन्दं शरणं गतः कर्तं कृत्यं परिहृत्य, यद्वा कर्त्तमेदं कृतिछेदने इत्यस्मात् वासुदेवः सर्व्वमिति बुद्धेरित्यर्थः । †

विहितकर्म्मनिवृत्तिमुक्त्वा निषेधनिमित्तप्रायश्चित्तनिवृत्तिमाह—

* भक्तिरत्नावल्यामपि १३।१ † स्वामिटीकैवानुसृता ।

स्वपादमूलं भजतः प्रियस्य
त्यक्तान्यभावस्य हरिः परेशः।
विकर्म्म यच्चोत्पतितं कथञ्चित्
धुनोति सर्व्वं हृदि सन्निविष्टः ॥१५ *
भाः ११।५।४२

त्यक्ता अन्यस्मिन् देहादौ देवतान्तरे वा भावो येन अतएव तस्य विकर्म्मप्रवृत्तिर्न सम्भवति, यच्च कथञ्चित् प्रमादादिना तत्पतितं भवेत्, तथापि हरिर्धुनोति। ननु यमस्तन्न मन्येत? तत्राह परेश इति। ननु श्रुतिस्मृती ममैवाज्ञे इति भगवद्वचनात्तस्याज्ञाभङ्गं कथं सहेत? तत्राह प्रियस्येति। ननु नायं पापक्षयार्थं भजते तत्राह—हृदि सन्निविष्टः। नहि वस्तुशक्तिरर्थितामपेक्षत इत्यर्थः। †

षष्ठस्कन्धे यमवाक्यम्—

एवं विमृश्य सुधियो भगवत्यनन्ते
सर्व्वात्मना विदधते खलु भावयोगम्।
ते मे न दण्डमर्हन्त्यथ यद्यमीषां
स्यात् पातकं तदपि हन्त्युरुगायवादः ॥१६ *
भाः ६।३।२६

भावयोगं भक्तियोगं अमीषां पातकं न स्यादेव, यदि कथञ्चित् स्यात् तदपि उरुगायस्य वादः कीर्त्तनं हन्ति नाशयति। †

वृहन्नारदीये

दुर्वृत्तो वा सुवृत्तो वा मूढो वा पण्डितोऽपि वा।
हरिभक्तियुतो यस्तु तस्य सन्निहितो हरिः ॥१७

दुर्वृत्तः दुराचारोपि यो हरिभक्तियुतः तस्यापि हरिः सन्निहितः; सुवृत्तस्य सदाचारस्य भक्तस्य हृदि सन्निहित इति किमु वक्तव्यम्। मूर्खपण्डितयोरप्येवं वाच्यम्।

पद्मपुराणे विकुण्डलं प्रति यमदूतवाक्यम्।

दुराचारोऽपि दुःशीलः(१) सदाचाररतोऽपि वा।
भवन्ति वैष्णवास्त्याज्या(२) विष्णुञ्चेद् भजते नरः ॥१८
पः पुः स्वर्गखण्डे १५।१४८

इत्यादि वचनानुसारेण तदेक शरणतया दुराचारभक्तोऽपि मुक्तिमाप्नोति किं पुनराचारयुक्तोऽपीति निर्णीतम्।

---

इति भक्तिरत्नाकरे ऊनविंशमाहात्म्यम्।

## विंशमाहात्म्यम्

अथेदानीं प्रार्थनादिभगवद्भक्तिर्निरूप्यते (३)।

प्रथमे नवमाध्याये भीष्मवाक्यम्।

श्रीकृष्णमूर्त्तिं वर्णयन् रतिं प्रार्थयते।

त्रिभुवनकमनं तमालवर्णं
रविकरगौरवराम्बरं दधाने।
वपुरलककुलावृताननाब्जं
विजयसखेरतिरस्तु मेऽनवद्या ॥१
भाः १।९।३०

* भक्तिरत्नावल्यामपि ७।२७ + ५।३२ † स्वामिटीकैवोद्धृता। (१) दुष्कृतोऽपीति मुद्रितपुस्तके पाठः। (२) भवन्ति न सदा त्याज्य इति मुद्रितपुस्तके। (३) अथेदानीं भगवद् भक्तिप्रार्थना निरूप्यते इति (क) पुस्तके।

त्रिभुवनकमनं त्रैलोक्यां मध्ये कमनीयं तद्-वपुर्दधाने त्वयि रतिर्मेऽस्तु तमालवत् नीलो वर्णो यस्य तत् प्रातः कालीनरवेः कराविव गौरे पीते वरेर्निर्म्मले अम्बरे यस्मिन् तत् अलककुन्तलैरुपर्य्यावृतं आननाब्जं यस्मिन् तत्, विजयसखे, पार्थसारथौ अतवद्या अहैतुकी फलाभिसन्धिरहिता रतिरस्तु। विजयसखत्वमेव वर्णयन् रतिं प्रार्थयते। †

युधि तुरगरजोविधूम्रविश्वक्-
कचलुलित श्रमवार्य्यलंकृतास्ये।
मम निशितशरैर्विभिद्यमानः
त्वचि विलसत् कवचेऽस्तु कृष्ण आत्मा ॥२
भाः १।६।३१

युधि युद्धे तुरगानां खुररजस्तुरगरजस्तेन विधूम्रा धूसरा ते च ते विश्वञ्च इतस्ततश्चलन्तः कचाः कुन्तलास्तैर्लुलितं विकीर्णं श्रमवारि स्वेदवारिरूपं तेन भक्तवात्सल्यद्योतकेनालङ्कृतमास्यं यस्य तस्मिन् श्रीकृष्णे मम आत्मा मनः अस्तु रमतामित्यर्थः। पुनः किम्भूते मदीयैर्निशितैस्तीक्ष्णैः शरैः भिद्यमाना त्वक् यस्य, शरैरेव विलसत् कवचं यस्य तस्मिन्। †

किञ्च—

सपदि सखि-वचो निशम्य मध्ये
निजपरयोर्बलयो रथं निवेश्य।
स्थितवति परसैनिकायुरक्ष्णा
हृतवति पार्थसखे रतिर्म्ममास्तु ॥३
भाः १।६।३२

सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत।
यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान्।

इति सख्युरर्ज्जुनस्य वाक्यं निशम्य सपदि-तत्क्षणमेव स्वपरयोर्बलयोः सैन्ययोर्मध्ये स्थिते पार्थसखे त्वयि रतिरस्तु, तत्र स्थित्वा कृतं सख्यं दर्शयति—परस्य दुर्य्योधनस्य सैनिकानां आयुरक्ष्णा कालदृष्ट्या हृतवति, असौ भीष्मः असौ द्रोणः असौ कर्णः इति तत्तत् प्रदर्शनव्याजेन दृष्ट्यैव सर्व्वेषामायुराकृष्य अर्ज्जुनस्य जयं कृतवति। न केवलमर्ज्जुनस्य सपक्षायुर्हरणेनैव जयमावहत् किन्तु अविद्याहरणेनापीत्याह— †

व्यवहितपृतनामुखं निरीक्ष्य
स्वजनवधाद्विमुखस्य दोषबुद्ध्या।
कुमतिमहरदात्मविद्यया यः
चरणरतिः परमस्य तस्य मेऽस्तु ॥४
भाः १।६।३३

व्यवहिता दूरे स्थिता या पृतना सेना तस्याः मुखमिव मुखं यस्याः अग्रे स्थितान् भीष्मादीन् निरीक्ष्य स्वजनवधाद्विमुखस्य निवृत्तस्य।

तदुक्तं गीतासु—

"एवमुक्त्वार्ज्जुनः संख्ये रथोपस्थ उपाविशत्।
विसृज्य सशरं चापं शोकसंविग्नमानस" ॥

इति कुमतिम् अहं हन्तेत्यादिकुबुद्धिम्। †

तृतीये पञ्चदशे सनत्कुमारादिवाक्यम्। इदानीं स्वापराधं द्योतयन्तो भक्तिं प्रार्थयन्ते।

कामं भवः स्ववृजिनैर्निरयेषु नः स्या-
च्चेतोऽलिवद्यदि नु ते पदयो रमेत।

† स्वामिटीकैवोपन्यस्ता।

वाचश्च नस्तुलसिवद् यदि तेऽङ्घ्रिशोभाः
पूर्य्येत ते गुणगणैर्यदि कर्णरन्ध्रः ॥५ *
भाः ३।१५।४९

हे भगवन् इतः पूर्व्वं अस्माकं वृजिनं नाभवत् इदानीं तु सर्व्वाण्यपि जातानि, यतस्त्वद्भक्तौ सत्तौ अतस्तैः स्ववृजिनैः निरयेषु कामं नोऽस्माकं भवो जन्म स्यात्, नु वितर्के। यदि नः चेतः ते पदयो रमेत अलिवत्, यथा अलिः कण्टकैः आविध्यमानोऽपि पुष्पेषु रमते तद्वत् विद्वान् विगणय्य यदि रमेत, अङ्घ्रिभ्यां शोभा यासां वाचां ताः यथा तुलसी स्वगुणमनपेक्ष्य त्वदङ्घ्रिसम्बन्धेनैव शोभते तथा नो वाचश्च शोभेरन्, यदिच ते गुणगुणैः पूर्य्येत कर्णरन्ध्र इत्यल्पस्य पूरणमिव याचकरीत्या प्रार्थयन्ते। अयन्तु गूढ़ाभिप्रायः, कर्णरन्ध्रस्य—आकाशत्वात् गुणगणानाञ्चामूर्त्तत्वात् न कदाचित् पूरणम् अतो नित्यमेव श्रवणं फलिष्यति। †

षष्ठस्कन्धे एकदशाध्याये वृत्रवाक्यम्। न नाकपृष्ठमित्यादिश्लोकेन स्वर्गादिकं न काङ्क्षइत्युक्तं तर्हि किमिच्छसि तत्राह।

अजातपक्षा इव मातरं खगाः
स्तन्यं यथा वत्सतराः क्षुधार्त्ताः।
प्रियं प्रियेव व्युषितं विषण्णा
मनोऽरविन्दाक्ष दिदृक्षते त्वाम् ॥६
भाः ६।११।२४

अजातपक्षा खगाः क्षुधापीड़िताः यथा मातरं द्रष्टुमिच्छन्ति यथा दाम्ना बद्धा वा नववत्साः स्तन्यं, यथा व्युषितं दूरदेशगतं प्रियं प्रिया कामेन विषण्णा तथा मे मम तापत्रयपीड़ितं कर्म्मणा बद्धञ्च कामादिभिर्व्विषण्णाञ्च मनः त्वां दिदृक्षते द्रष्टुमिच्छतीत्यर्थः। †

तथाच तत्र भगवन्तं प्रार्थयते—

अहं हरे तव पदैकमूल-
दासानुदासो भवितास्मि भूयः।
मनः स्मरेतासुपतेर्गुणानां
गृह्णीतवाक् कर्म्मकरोतु कायः ॥७ *
भाः ६।११।२२

तव पाद एव एकं मूलं आश्रयो येषां तेषां दासानुदासः भूयो भवितास्मि भविष्यामि भवेयम् असुपतेः प्राणनाथस्य तव गुणान् मम मनः स्मरतु, वागपि तानेव कीर्त्तयतु, कायः तवैव कर्म्म करोतु। †

तत्रैव—

ममोत्तमश्लोकजनेषु सख्यं
संसारचक्रे भ्रमतः स्वकर्म्मभिः।
तन्माययात्मात्मजदारगेहे-
ष्वासक्तचित्तस्य न नाथ भूयात् ॥८
भाः ६।११।२५

उत्तमश्लोकजनेषु भक्तेषु सख्यं मम भूयात् तन्मायया देहाद्यासक्तचित्तस्य भूयोऽपि तेषु आसक्तिर्न भूयादित्यर्थः। †

पुराणान्तरे—

मज्जन्मनः फलमिदं मधुकैटभारे
मत्प्रार्थनीयमदनुग्रह एष एव।
त्वद्भृत्यभृत्यपरिचारकभृत्यभृत्य-
भृत्यस्य भृत्य इति मां स्मर लोकनाथ ॥९

* भक्तिरत्नावल्याम् ३।१४+३।९ † स्वामिटीकैवमुक्ता।

दशमे दशमे नल-कुवेरवाक्यं, तौ वरं प्रार्थयेते ।

वाणी गुणानुकथने श्रवणौ कथायां
हस्तौ च कर्म्मसु मनः तव पादयोर्नः ।
स्मृत्या शिरः तव निवासजगत्प्रणामे
दृष्टिः सतां दर्शनेऽस्तु भवत्तनूनाम् ॥१०

भाः १०।१०।३८

आवयोः पूर्व्वस्वभावो माभूत् किन्तु वाणी तव गुणानुकथनेऽस्तु वाणी तव गुणान् कथयतु इत्यर्थः, श्रवणौ कर्णौ तव कथानुकथने न इति वहुवचनम् । अस्मत् सङ्गिनां सर्व्वेषां परिग्रहार्थं, तव निवासभूतं यत् जगत् तस्य प्रणामे नः शिरः अस्तु इत्यर्थः भवत्तनुनां भवतो मूर्त्तीनाम् । †

तत्र कृष्णं प्रति राज्ञां वाक्यम्—

यद्येवंभूता यूयं तर्हि मम चरणौ स्मरत ततो अनायासेन मुक्तिर्भविष्यति किमस्मदपेक्षयेति चेदत आहुः—

तं नः समादिशोपायं भवतश्चरणाब्जयोः ।
स्मृतिर्यथा न विरमेदपि संसरतामिह ॥११

भाः १०।७३।१५

तच्चरणस्मृतिरपि तत्प्रसादफलमेवेत्यर्थः । †

तत्र चतुरशीतितमे भगवन्तं प्रति मुनीनां वाक्यम् ।

तस्याद्य ते ददृशिमाङ्घ्रिमघौघमर्ष-
तीर्थास्पदं हृदिकृतं सुविपक्वयोगैः ।
उत्सिक्तभक्त्युपहताशयजीवकोशा
आपुर्भवद्गतिमथानुगृहाण भक्तान् ॥१२

भाः १०।८४।२६

अघौघस्य सर्व्वनाशं करोतीति यद्गङ्गाख्यंतीर्थ तस्यास्पदं आश्रयं तेऽङ्घ्रिं सुविपक्वयोगैरपि हृदिकृतं केवलं न तु दृष्टं ते अङ्घ्रिं ददृशिमो दृष्टवन्तो वयं बहुभिः पुण्यैः अतोऽस्मान् अनुगृहाण भक्तान् कृत्वा अनुग्रहं कुर्व्वित्यर्थः । ननु किं भक्त्या यथापूर्व्वं तप एव तप्यतां इति नेत्याहुः । उत्सिक्ता उद्रिक्ता या भक्तिः तया अपहृतः आशयलक्षणो जीवकोशो येषां ते एव पूर्व्वं भगवति गतिमापुः नान्य इति । †

प्रथमे पृथावाक्यम्—

विपदः सन्तु ताः शश्वत् तत्र तत्र जगद्गुरो ।
भवतो दर्शनं यत् स्यादपुनर्भवदर्शनम् ॥१३

भाः १।८।२५

यत् यासु विपत्सु कीदृशं दर्शनं ? नास्ति पुनरपि भवदर्शनं यस्मात् तत् ।

दशमे श्रुतिस्तुतौ प्रतिमा(१) ।

अवगमं तव मे दिश माधव
स्फुरति यत्र सुखासुखसङ्गमः ।
श्रवणकीर्त्तनभावमथापि वा
नहि भवामि यथा विधिकिङ्करः ॥१४

भाः १०।८७।४० श्रीधरटीकायाम् ।

एकादशे ब्रह्मादिवाक्यम् ।

विभ्युस्तवामृतकथोदवहास्त्रिलोक्याः
पादावनेजसरितः शमलानि हन्तुम् ।
आनुश्रवं श्रुतिभिरङ्घ्रिजमङ्गसङ्गैः
तीर्थद्वयं शुचिषदस्त उपस्पृशन्ति ॥१५ *

भाः ११।६।१७

† स्वामिटीकैवानुसृता । (१) प्रतिमाकविताकविर्विविधम् वाक्यमिति यावत् । * भक्तिरत्नावल्याम् ४।३३

हे भगवन्, तव कथामृतोदवहा सरितः त्रिलोक्याः शमलं पापं निहन्तुं विभ्युः समर्थाः पादावनेजसरितश्चापि अतो ये सुधियः एकान्तिनो भक्ताः ते तीर्थद्वयं उपस्पृशन्ति सेवन्ते, केन प्रकारेण ? तत्राह, श्रुतिभिः कर्णैः आनुश्रवं तव चरितामृत अङ्गसङ्गैः मज्जनादिभिः, अङ्घ्रिज तव पादोदकमिति।

पुनः श्रुतिस्तुतौ प्रतिभा—

तदंशस्य ममेशान तन्मायाकृतबन्धनम्।
तवङ्घ्रिसेवामादिश्य परानन्द निवर्त्तय ॥१६

भाः १०।८७।२० श्रीधरटीकायाम्।

भुजङ्गप्रयाते—

प्रपन्नच्युतानन्तगोविन्दविष्णो
मुरारे हरे नाथ नारयणेति।
यथानुस्मरिष्यामि भक्त्या भवन्तं
तथा मे दयाशील देव प्रसीद ॥१७

विष्णुभुजङ्गप्रयातस्तोत्रे—१४

इति निदर्शनेन एकशरणतया भगवद्भक्तिप्रार्थनेनैव गतिर्लभ्यते नान्यथेति निर्णीतम्।

इति भक्तिरत्नाकरे विंशमाहात्म्यम्।

———

## एकविंशमाहात्म्यम्

इदानीं तु कलेः परमधर्म्मो निरूप्यते।
एकादशे पञ्चमे निमिं प्रति करभाजनवाक्यं, तदाह—

कृष्णवर्णं त्विषा कृष्णं साङ्गोपाङ्गास्त्रपार्षदं।
यज्ञैः संकीर्त्तनप्रायैः यजन्ति हि सुमेधसः ॥१

भाः ११।५।२६

कृष्णवर्णं हरिं सुमेधसो विवेकिनो यजन्ति; रूक्षतां निवारयति त्विषा कान्त्या अकृष्णं इन्द्रनीलमणिवदुज्ज्वलं, यद्वा त्विषा कृष्णं कृष्णावतारं अनेन कलौ कृष्णावतारस्य प्राधान्यं दर्शयति। अङ्गानि हृदयादीनि उपाङ्गानि कौस्तुभादीनि अस्त्राणि सुदर्शनादीनि पारिषदाः सुनन्दादयः तत्सहितं यज्ञैरर्च्चनैः संकीर्त्तन नामोच्चारणं स्तुतिश्च तत्प्रधानैः। †

कलौ स्तुतिमाह—

ध्येयं सदा परिभवघ्नमभीष्टदोहं
तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यं।
भृत्यार्त्तिहं प्रणतपाल भवाब्धिपोतं
वन्दे महापुरुष ते चरणारविन्दम् ॥२

भाः ११।५।३०

हे प्रणतपाल! हे महापुरुष! तव चरणारविन्दं वन्दे। कथम्भूतं ध्येयं ध्यातुं योग्यं सर्व्वैरेव सर्व्वत्र सम्बध्यते। ध्येयत्वे हेतवः इन्द्रिय-कुटुम्बादिभिः यः परिभवः तिरस्कारः तं हन्तीति तथा तत्, किञ्च अभीष्टदोहं मनोरथपूरकं, किञ्च तीर्थास्पदं गङ्गाद्याश्रयत्वेन परमपावनं शिवविरिञ्चिभ्यां नुतं स्तुतं। ननु तौ कृतार्थावेव किमर्थं ताभ्यां नुतं? तत्राह, शरण्यं आश्रयणीयं सुखात्मकमित्यर्थः, तर्हि ब्रह्मादीनां स्तुत्यं कथं प्राकृतजन गोचरः स्यात्? न भृत्यार्त्तिहं यस्य कस्यापि भृत्यमात्रस्य आर्त्तिहं न केवलं आगन्तुकार्त्तिमात्रं हन्ति किन्तु भवाब्धिपोतं संसारार्णवतारकम्। †

इदानीं स्वस्वमात्सकाभक्तत्वात् [illegible] सापेक्षतां दर्शयन् श्रीरामचन्द्रं स्तौति—।

† स्वामिटीकैवानुसृता।

त्यक्त्वा सुदुस्त्यजसुरेप्सितराज्यलक्ष्मीं
धर्म्मिष्ठ आर्य्यवचसा यदगादरण्यं।
मायामृगं दयितयेप्सितमन्वधावत्
वन्दे महापुरुष ते चरणारविन्दम् ॥३

भाः ११।५।३१

अन्यैः सुदुस्तजा या राज्यलक्ष्मीः तां त्यक्त्वा यदिति य इत्यर्थः योऽरण्यमगात् किं राज्यस्य वैकल्यदर्शनेन न धर्म्मिष्ठः कुतः आर्य्यस्य गुरोर्द्दशरथस्य वचसा, किञ्च एवं राज्यं त्यक्त्वापि भक्तवात्सल्येन दयितया सीतया ईप्सितं मायामृगं सुवर्णाकारं योऽन्वधावत् तस्य भगवतश्चरणारविन्दं वन्दे, धर्म्मिष्ठेति सम्बोधनं वा, यत अगादिति चरणारविन्दे एव उच्येते यश्च मायामृगं अनुधावत् तत् ते चरणारविन्दं वन्दे। एतेषु चतुर्ष्वपि युगेषु कलिरेव श्रेष्ठः इत्याह। †

कलिं सभाजयन्त्यार्य्या गुणज्ञाः सारभागिनः।
यत्र संकीर्त्तनेनैव सर्व्वस्वार्थोऽपि लभ्यते ॥४ *

भाः ११।५।३३

गुणज्ञाः कलेगु'णं जानन्तीति ये ते। ननु दोषानां बहुलत्वात् कथं सभाजयन्ति? तत्राह, सारभागिनः गुणांशग्राहिणः। कोऽसौ गुणः? तत्राह यत्रेति, यत्र कलौ केवलेन कीर्त्तनेनैव सर्व्वस्वार्थः परमपुरुषार्थोऽपि लभ्यते।

तदुक्तं—

ध्यायन् कृते यजन् यज्ञैः त्रेतायां द्वापरेऽर्च्चयन्।
यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम् ॥५ †

कलौ कीर्त्तनस्य फलमाह—

नह्यतः परमो लाभः देहिनां भ्राम्यतामिह।
यतो विन्देत परमां शान्तिं नश्यति संसृतिः ॥६ *

भाः ११।५।३४

कलौ यतः यस्मात् संकीर्त्तनात् परः परमो लाभः नास्ति। तत् कुतः? तत्राह—यतः संकीर्त्तनात् परमां शान्तिं विन्देत संसृतिः संसरणं जननमरणादिरपि नश्यति।

किञ्च—

कृतादिषु प्रजा राजन् कलाविच्छन्ति सम्भवम्।
कलौ खलु भविष्यन्ति नारायणपरायणाः ॥७

भाः ११।५।३५

क्वचित् क्वचित् महाराज द्रविड़ेषु च भूरिशः।
ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी ॥८

भाः ११।५।३६

कावेरी च महापुण्या प्रतीची च महानदी।
ये पिबन्ति जलश्चासां मनुजा मनुजेश्वर ॥९

भाः ११।५।३७

प्रायो भक्ता भगवति वासुदेवेऽमलाशयाः।
सन्तः प्रायो भगवति परं भक्ता भवन्ति हि ॥१०

भाः ११।५।३८

द्वादशस्कन्धे तृतीयाध्याये शुकवाक्यम्। तदेवं कलिदोषं प्रपञ्च्य प्रस्तुतं निस्तारोपायमाह षड्भिः।

पुंसां कलिकृतान् दोषान् द्रव्यदेशात्मसम्भवान्।
सर्व्वान् हरति चित्तस्थो भगवान् पुरुषोत्तमः ॥११ *

भाः १२।३।४६

† स्वामिटीकैवानुसृता। * भक्तिरत्नावल्याम् ५।४८+५।४९+६।१०

द्रव्यदेशात्मभिः सम्भवो येषां तान् चित्तस्थः चित्ते स्फुरितः। स्फुरणप्रकारमाह— †

अतः संकीर्त्तितो ध्यातः पूजितश्चादृतोऽपिवा।
नृणां धूनोति भगवान् हृत्स्थो जन्मायुताशुभम् ॥१२*

भाः १२।३।४०

अयमेवोपायः नान्य इति सदृष्टान्तमाह—

यथा हेम्निगतो(१) वह्नि दुर्व्वर्णं हन्ति धातुजम्।
एवमात्मगतो विष्णुर्योगिनामशुभाशयम् ॥१३ *

भाः १२।३।४१

धातुजं ताम्रादिसंश्लेषजातं हेम्नो दुर्व्वर्णं मालिन्यं तत्र स्थितो वह्निरेव हरति, न तु तोयादि एवं योगिनामपि विष्णुरेव न तु योगादिकमित्यर्थः। एतदेव विवृणोति। †

विद्या-तपःप्राणनिरोध-मैत्री
तीर्थाभिषेक-व्रत-दान-जप्यैः।
नात्यन्तशुद्धिं लभतेऽन्तरात्मा
यथा हृदिस्थे भगवत्यनन्ते ॥१४ *

भाः १२।३।४२

विद्या देवतोपासना तपः स्वधर्म्माचरणं भूतेषु-मैत्री तैरत्यन्तशुद्धिं न लभते।

तस्मात् सर्व्वात्मना राजन् हृदिस्थं कुरु केशवं।
म्रियमाणो ह्यवहितः ततो याति परां गतिम् ॥१५ *

भाः १२।३।४३

म्रियमाणैरभिध्येयो भगवान् हरिरीश्वरः।
आत्मभावं नयत्याशु सर्व्वात्मा सर्व्वसम्भवः ॥१६ *

भाः १२।३।४४

आत्मभावं स्वरूपं नयति। †

इदानीं कलिं स्तौति—द्वाभ्याम्। †

कलेर्दोषनिधे राजन् अस्ति ह्येको महद्गुणः।
कीर्त्तनादेव कृष्णस्य मुक्तबन्धः परं व्रजेत् ॥१७ *

भाः १२।३।४५

कृते यद् ध्यायतो विष्णुं त्रेतायां यजतो मखैः।
द्वापरे परिचर्य्यायां कलौ तद्धरिकीर्त्तनात् ॥१८ *

भाः १२।३।४६

कुर्म्मपुराणे—
कलिना दुष्टसर्पेण दष्टानामिह भेषजं।
नास्ति नास्त्येव नास्त्येव रामनामामृतं विना ॥१९ *

विष्णुधर्म्मोत्तरे—
रामेति वर्णद्वयमादरेण
सदा स्मरन् मुक्तिमुपैति जन्तुः।
कलौ युगे कल्मषमानसानां
अन्यत्र धर्म्मे खलु नाधिकारः ॥२० **

तथाच ब्रह्माण्डपुराणे—
कृते कलियुगं तस्य कृतं तस्य कलौ युगे।
यस्य चेतसि गोविन्दो हृदये यस्य नाच्युतः ॥२१ **

तथाच मत्स्यपुराणे—
तेऽपि पूज्यास्तेऽपि धन्याः ते एव सुहृदो जनाः।
स्मरन्तः स्मारयन्तोऽपि हरेर्नाम कलौ युगे ॥२२ **

† स्वामिटीकैवानुसृता। (१) स्थितो इति मुद्रितभागवते पाठः। * श्लोकोऽयं कूर्म्मपुराणस्य वंगवासीसंस्करणे न लभ्यते।
* भक्तिरत्नावल्याम् ३।७+६।११+६।१८+६।६+६।७+२।५१+२।५२ ** मुद्रित पुस्तकेषु नोपलभ्याः।

बृहन्नारदीये—

अहोरात्रं हरेर्नाम कीर्त्तयन्तीह ये नराः।
निष्कामा वा सकामा वा न कलिर्बाधते क्वचित् ॥२३
बृः नाः ३८।९८

हरेर्नामैव नामैव नामैव मम जीवनम्।
कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा ॥२४
बृः नाः ३८।१२६

वैष्णवानन्दलहरौ—

कलौ नाम कलौ नाम कलौ नामैव केवलम्।
हित्वा नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा ॥२५

वैष्णवाल्लभते भक्तिं भक्त्या मां लभते नरः।
तस्माद्धि वैष्णवो विष्णुः कलेर्मध्ये विशेषतः ॥२६

प्रथमे कलिनिग्रहे—

नानुद्वेष्टि कलिं सम्राट् सारङ्ग इव सारभुक्।
कुशलान्याशु सिध्यन्ति नेतराणि कृतानि यत् ॥२७
भाः १।१८।७

सारभुक् यथा भ्रमरः पुष्पमनिहत्य तत् सारमेव गृह्णाति तथा सम्राट् जम्बुद्वीपाधिपतिः कलेः सारमाश्राय तं कलिं न द्वेष्टि न हतवान्। किं तत्सारं? तदाह—कुशलानि पुण्यानि आशु मनसः सङ्कल्पितान्येव सिध्यन्ति, इतराणि पापानि कृतान्येव सिध्यन्ति न तु सङ्कल्पमात्रेणेत्यर्थः।

द्वादशे शुकः महान्तं मन्युमाह द्वाभ्याम्।

यन्नामधेयं म्रियमाण आतुरः
पतन् स्खलन् वा विवशो गृणन् पुमान्।

प्रायेण मर्त्या भगवन्तमच्युतं
यक्ष्यन्ति पाषण्डविभिन्नचेतसः ॥२८
भाः १२।३।३८

त्रिलोकनाथैः ब्रह्मादिभिः अवनतं अर्च्चितं पादपङ्कजं यस्य तं त यक्ष्यन्ति न भजन्ति, के न भजन्ति? पाषण्डविभिन्नचेतसः पाषण्डैर्विभिन्नाः पृथक्कृताः चेतो येषाम्।

इत्यादि वचनानुसारेण तदेकशरणतया कलौ हरिगुणनामकीर्त्तनेनैव भगवत्-प्राप्तिर्नान्यथा निर्णीतम्।

इति भक्तिरत्नाकरे एकविंशमाहात्म्यम्।

## द्वाविंशमाहात्म्यम्

इदानीं जीवात्म-परमात्मभेदमाह—

प्रथमे टीकाकारेणोक्तम्—

स ईशो यद्वशे माया स जीवो यस्तयार्दितः।
स्वाविर्भूतपरानन्दः स्वाविर्भूतसुदुःखभूः ॥१
भाः १।७।६ श्रीधरीटीका।

ह्लादिन्या सम्विदाश्लिष्टः सच्चिदानन्द ईश्वरः।
स्वाविद्या संवृतो जीवः संक्लेशःनिकराकरः ॥२
भाः १।७।६ श्रीधरीटीका।

ह्लादिन्या सुखस्वरूपिन्या सम्विदा आनन्देनाश्लिष्टो युक्तः स ईश्वरः स तु अविनाशी चित्चैतन्यरूपः

आनन्दघनः स्वस्य असाधारणरूपा या अविद्या तया संवृतः पिहितः निजानन्दः संक्लेशनिकराकरः दुःखचयैरावृतो जीवः। एतेन जीवेश्वरयोर्भेदः।

चतुर्थे ध्रुवस्तुतौ

ननु शयनाद्यवस्थावत्त्वे जीवात् को विशेष इत्याह—

त्वं नित्यमुक्तपरिशुद्धविबुद्ध आत्मा
कूटस्थ आदिपुरुषो भगवांस्त्यधीशः।
यद्बुद्ध्यवस्थितिमखण्डितया स्वदृष्ट्या
द्रष्टा स्थितावधिमखोऽव्यतिरिक्त आस्से ॥३

भाः ४।९।१५

त्वन्तु व्यतिरिक्तः जीवविलक्षण एव आस्से तिष्ठसि। तद् वैलक्षण्यमेवाह—त्वं नित्यमुक्तः जीवस्तु तदुपासान्मुच्यते(१), त्वं परिशुद्धः स तु मलिनः, त्वं विबुद्धः स तु अज्ञः, त्वं आत्मा स तु जड़ः, त्वं कूटस्थः स विकारी, त्वमादिः अनादिः पुरुषः स तु आदिमान्, त्वं भगवान् स तु भगहीनः, त्वं तु त्रयाणां गुणानामधीशः स तु परतन्त्रः। कुत एतद्वैलक्षण्यं? यद् यतो बुद्ध्यवस्थितिः बुद्धेस्तां ता मवस्थामखण्डितया स्वदृष्ट्या चित्शक्त्या द्रष्टा पश्यति तथाभूत एव त्वं स्थितो पालने अधिमखः यज्ञाधिष्ठाता श्रीकृष्णः(२)। †

एकादशे त्रयोविंशे उद्धवं प्रति भगवद्वाक्यम्।

अनीह आत्मा मनसा समीहता
हिरण्मयो मत्सख उद्विचष्टे।
मनः स्वलिङ्गं परिगृह्य कामान्
जुषन् निवद्धो गुणसङ्गतोऽसौ ॥४

भाः ११।२२।४०

यः परमात्मा समीहता चेष्टावता मनसा अनीहः क्रियासङ्गरहितः हिरण्मयः चिद्रूपशक्तिप्रधानः मत्सखः जीवनियन्ता तद्विचष्टे अतिरोहितज्ञानेन केवलं पश्यति असौ जीवः स्वलिङ्गं संसारप्रकाशकं मनः परिगृह्य आत्मत्वेन स्वीकृत्य कामान् जुषन् सेवमानः गुणसङ्गतो निवद्धः।

योगसारे—

परमात्मा निराकारो विभुर्नित्यो निरामयः।
सहजानन्दरूपोऽसौ नित्यविज्ञानविग्रहः ॥५

अशरीरी जगत्कर्त्ता जगत्पाता ह्यसौ जगत्।
शृणोति याति गृह्णाति वेत्ति तिष्ठति हन्त्यपि ॥

न किञ्चित् कुरुते कर्म्म निष्कलो निष्परिग्रहः।
निरीहो निर्म्ममः शुद्धभावः सङ्गविवर्जितः ॥७

प्रविभज्येत निःसङ्गः निराशीषः निराकुलः।
तस्यैकदेशो जीवात्मा देही नित्योऽव्ययाव्ययः ॥८

सुखदुःखमयो माया-मोहपाशेन यन्त्रितः।
कर्म्मबन्धनिवद्धोऽसौ भवसिन्धौ निसीदति ॥९

अविकारी विभुः शान्तस् त्वभिन्नः परमात्मना।
भ्रान्तिज्ञानावृतो भूत्वा नात्मानं वेत्ति तादृशम् ॥१०

इत्यादि वचनानुसारेण तदेकशरणतया अज्ञानामपि हरिमत्स्यैव गतिर्लभ्यते, जीवात्मपरमात्मज्ञानेन तु किमवक्तव्यमिति निर्णीतम्।

इति भक्तिरत्नाकरे द्वाविंशमरत्नम्।

† स्वामिटीकैवानुसृता। (१) त्वत् प्रसादान्मुच्यत इति मुद्रित स्वामिटीकायां पाठः। (२) श्रीविष्णुरिति [illegible] स्वामिटीका।

# त्रयोविंश माहात्म्यम्

इदानीं हरिभक्तिहीनपरमज्ञानिनां निन्दामाह ।

तृतीयस्कन्धे नवमे ब्रह्मणो वाक्यम् ।

ये निष्कामाः सन्तः त्वां नाद्रियन्ते ते नरकभाज इत्युक्तं । ये तु तत्कथाश्रवणादिविमुखाः सन्तः कामकर्म्मपराः(१) तेऽतिमन्दा इत्याह ।

> दैवेन ते हतधियो भवतः प्रसङ्गात्
> सर्व्वाशुभोपशमनाद्विमुखेन्द्रिया ये ।
> कुर्व्वन्ति कामसुखलेशलवाय दीना
> लोभाभिभूतमनसोऽकुशलानि शश्वत् ॥१

भाः ३।९।७

दैवेन हतधियो नष्ट मतयः प्रसङ्गात् श्रवणकीर्त्तनरूपात् सर्व्वाशुभोपशमनात् सर्व्वदुःखनिवर्त्तकात् विमुखानि इन्द्रियाणि येषां अकुशलानि अभद्राणि शश्वत् अनवरतं कुर्व्वन्ति । †

अकुशलत्वमेव दर्शयति—

> क्षुट् तृट् त्रिधातुभिरिमा मुहुरर्द्यमानाः
> शीतोष्णवातवर्षैरितरेतराच्च ।
> कामाग्निनाच्युतरुषा च सुदुर्भरेण
> सम्पश्यतो मन उरुक्रम सीदते मे ॥२

भाः ३।९।८

क्षुट् तृट् त्रिधातवः वातपित्तश्लेष्मानः तैरिमाः प्रजा सुदुर्भरेण दुःसहेन कामाग्निना अच्युतया रुषा अनवच्छिन्नक्रोधेन च पीड्यमानाः सम्पश्यतो मे मनः सीदति । †

भवतु अविवेकिनामेवं, विवेकिनस्तु मुक्ता एवेति किं तेषां भक्त्या कृत्यमत आह—

> अह्न्याप्तार्त्तकरणाः निशि निःशयानाः
> नाना मनोरथधिया क्षणभग्ननिद्राः ।
> दैवाहतार्थरचना ऋषयोऽपि देव
> युष्मत् प्रसङ्गविमुखा इह संसरन्ति ॥३

भाः ३।९।१०

अह्नि आप्तानि व्याप्तानि आर्त्तानि क्लिष्टानि च करणानि इन्द्रियाणि येषां रात्रौ विषयसुखलवोऽपि नास्ति, यतो निः शयानाः स्वप्नदर्शनेन च क्षणे क्षणे भग्ननिद्राः दैवेनाहतः सर्व्वतः प्रतिहताः अर्थरचनाः अर्थोद्यमा येषां ऋषयो मुक्ता अपि । †

प्रथमे षोड़शे शौनकादिवाक्यम् । हरिकथामृतस्याभावे वृथैव जीवनमित्याह—

> मन्दस्य मन्दप्रज्ञस्य वयो मन्दायुषश्च वै ।
> निद्रया ह्रियते नक्तं दिवा च व्यर्थकर्म्मभिः ॥४

भाः १।१६।९

मन्दस्य अलसस्य नक्तं रात्रौ यद्वयः आयुः निद्रया, दिवा अह्नि च यद्वयः तद् व्यर्थकर्म्मभिः अपह्रियते । †

द्वितीये तृतीये हरिभक्तिविहीनस्य जीवनमपि विफलं दर्शयन्नाह ।

> तरवः किं न जीवन्ति भस्त्राः किं न श्वसन्त्युत ।
> न खादन्ति न मेहन्ति किं ग्रामपशवोऽपरे ॥५ *

भाः २।३।१८

(१) कामकर्मेति मुद्रित स्वामिटीका पाठः । † स्वामिटीकैवानुसृता । * भक्तिरसामृतसिन्धुः(?) भक्तिरत्नावल्याम् १।९५ + ४।१३

हरिभक्तिविहीनाश्चेद् जीवन्ति तर्हि तरवः किं न जीवन्ति ? ननु तेषां निश्वासो नास्तीति। भस्त्राः किन्न श्वसन्त्युत ? ननु तेषां भोजनादिकं नास्तीति, तत्राह न खादन्तीति। ग्रामस्य पशवो ग्राम्य शूकराः एतेन हरिभक्ति विना ये जीवन्ति ते मृतवत् वर्ज्जनीया इत्यर्थः।

तत्रैव शौनकादिवाक्यम्।

हरिभक्तिविहीनाः पुरुषाः पशोरप्यधमा इति दर्शयन्नाह—

श्वविड्वराहोष्ट्रखरैः संस्तुतः पुरुषः पशुः।
न यत् कर्णपथोपेतो जातु नाम गदाग्रजः ॥६ *

भाः २।३।१९

श्वादिभिः सम्मितः(१) सदृशो निरूपितः यस्य कर्णपथं कदाचिन्न गतः स अवज्ञास्पदत्वात् श्वभिः कश्मलविषयासक्तत्वात् विड्वराहैर्ग्राम्यशूकरैः कण्टकतूल्यदुःखविषयासक्तत्वात् उष्ट्रैर्वृथाभारवाहकत्वात् खरैस्तुल्य इत्यर्थः। †

तृतीय स्कन्धे पञ्चमाध्याये विदुरवाक्यम्।

एवम्भूतायां हरिकथायां ये न रमन्ते तान् शोचति।

तान् शोच्यशोच्यानविदोऽनुशोचे
हरेः कथायां विमुखानघेन।
क्षिणोति देवोऽनिमिषस्तु येषा-
मायुर्वृथावादगतिस्मृतीनाम् ॥७ *

माः ३।५।१४

तान् शोच्यान् तेषामपि शोच्या ये तान् अविदः भारततात्पर्य्यानभिज्ञान् ये तु ज्ञात्वापि हरेः कथायां विमुखाः तेषामपि शोच्यानिति। अनिमिषः कालो येषाम् आयुः क्षेपयति, तत्र हेतुः वृथैव वादगतिस्मृतयो वाग्देहमनो व्यापाराः येषाम्। †

तत्रैव पञ्चदशाध्याये वैकुण्ठवर्णनायां ब्रह्मणो वाक्यम्।

यन्न व्रजन्त्यघभिदो रचनानुवादा-
च्छृण्वन्ति येऽन्यविषयाः कुकथा मतिघ्नीः।
यास्तु श्रुता हतभगैर्नृभिरात्तसारा
स्तांस्तान् क्षिपन्त्यशरणेषु तमःसु हन्त ? ॥८ *

३।१५।२३

यत् वैकुण्ठं न व्रजन्ति के ? ये कुकथाः शृण्वन्ति कास्ताः अघं भिनत्तीति अघभित् तस्य हरेः रचनाः सृष्ट्यादिलीलाः तस्यानुवादादन्यविषयाः अर्थकामादिविषयवार्त्ताः मतिभ्रंशिकाः। तेषामव्रजने हेतुः; यास्तु हतभगैः हतभाग्यैः नरैः श्रुताः सत्यः तान् तान् श्रोतॄन् अशरणेषु तमःसु नरकेषु क्षिपन्ति। हन्त इति खेदे, कथम्भूताः आत्तःसारः श्रोतॄणां पुण्यं याभिः ताः। †

तत्र द्वात्रिंशाध्याये निन्दामाह—
नूनं दैवेन विहता ये चाच्युतकथासुधाम्।
हित्वा शृण्वन्त्यसद्गाथाः पुरीषमिवविड्भुजः ॥९ *

भाः ३।३२।१४

ये अच्युतकथासुधां हित्वा असतां कथां शृण्वन्ति ते नूनं निश्चितं दैवेन ईश्वरेण कुकथाश्रवणाय कर्म्मी कृत्वा विहताः; अतः तेषां बाधिर्य्यमेव श्रेय इति भावः।

(१) संस्तुतः सदृशत्वेन निरूपितः इति मुद्रित स्वामिटीकायां पाठः। † श्रीधरस्वामिटीकैवानुसृता। * [illegible]

अन्यकथायाः तुच्छत्वं दृष्टान्तेनाह पुरीषमिवेति ।

दशमे वेदस्तुतौ—

नरवपुः प्रतिपद्य यदि त्वयि
श्रवणवर्णनसंस्मरणादिभिः
नरहरे ! न वसन्ति नृणामिदं
इति वदुच्छ्वशितं विफलं ततः ॥१०

भाः १०।८७।१७ श्रीधरीटीका ।

एकादशे पञ्चमे चमसवाक्यम्—

य एषां पुरुषं साक्षात् आत्मप्रभवमीश्वरम् ।
न भजन्त्यवजानन्ति स्थानभ्रष्टाः पतन्त्यधः ॥११ *

भाः ११।५।३

एषां ब्राह्मणादीनां मध्ये अज्ञाः तं न भजन्ति, ये ज्ञात्वाप्यवजानन्ति, आत्मनः प्रभवो जन्म यस्मात् तम्, तदभजने कृतघ्नतामप्याह ईश्वरमिति स्थानात् वर्णाश्रमाद् भ्रष्टाः । †

ज्ञानलवदुर्विदग्धास्त्वचिकित्स्यत्वादुपेक्ष्या इत्याह—

विप्रो राजन्यवैश्यौ वा हरेः प्राप्ताः पदान्तिकम् ।
श्रौतेन जन्मनाथापि मुह्यन्त्याम्नायवादिनः ॥१२

भाः ११।५।५

उपनयनाध्यापनादिना हरेः पदान्तिकं तद्भजनोसमाधिकारं प्राप्ता अपि मुह्यन्ति कर्म्मफलेषु सज्जन्ते, कुतः आम्नायेषु ये वादा अर्थवादाः ते मोहकतया विद्यन्ते येषामिति ते ।

भक्तिमार्गदावृर्थाय तेषां मोहं प्रपञ्चयन् निन्दति ।

कर्म्मन्यकोविदः स्तब्धा मूर्खाः पण्डितमानिनः ।
वदन्ति चाटुकान् मूढ़ा यया माध्व्यागिरोत्सुकाः ॥१३

भाः ११।५।६

अकोविदः यथा बन्धनं न भवति तथा कर्त्तुमज्ञाः न चाभिज्ञानं पृच्छन्ति यतस्तब्धा अनम्राः, स्तब्धत्वे हेतुः यतो मूर्खाः अपि पण्डिता वयमिति मानयन्तः "अक्षय्यं ह वै चातुर्म्मास्ययाजिनः सुकृतं भवति" इत्यादि माध्व्या गिरोत्सुकाः सन्तो मूढ़ा तया चाटुकान् अप्सरोभिः सह विहारिष्यामः इत्यादि प्रियान् वादान् वदन्ति । †

एवं भगवत्पराङ्मुखानां बहुदोषतां प्रपञ्च्य तन्निष्ठां प्रपञ्चयति ।

ये त्वनेवम्विदोऽसन्त स्तब्धाः सदभिमानिनः ।
पशून् द्रुह्यन्ति विस्रब्धाः प्रेत्य खादन्ति ते च तान् ॥१४

भाः ११।५।१४

अनेवम्विदः यद् घ्राणभक्षण इति श्लोकोक्तमेव-धर्म्मं न विदन्ति ये ते विश्रब्धा निःशङ्का अनेन मनोरथो भविष्यतीति विश्वस्ता वा तदानीन्तनपोषणेन वा तैः पशुभिः विश्वस्तास्ते च पशवः प्रेत्यामुत्र तान् खादन्ति ।

तथाच—

मांसं भक्षयितामुत्र यस्य मांसमिहाद्म्यहम् ।
एतन्मांसस्य मांसत्वं प्रवदन्ति मनीषिणः ॥१५

इति वचनात्— †

† स्वामिटीकैवानुसृता । * भक्तिरत्नावल्याम् १।६०

द्विषन्तः परकायेषु आत्मानं हरिमीश्वरम् ।
मृतके सानुबन्धेऽस्मिन् बद्धस्नेहाः पतन्त्यधः ॥१६

भाः ११।५।१५

अभिचारादिना द्विषन्तः मृतके देहे सानुबन्धे पुत्रादि सहिते । अज्ञास्तत्त्वज्ञैरनुकम्पिताः स्तुवन्ति, तत्त्वज्ञास्तु स्ववः ये नात्यन्तमज्ञाः न च तत्त्वज्ञा ते त्वन्तरालवर्त्तिनः पतन्तीत्याह । †

ये कैवल्यमसंप्राप्ताः ये चातीताश्च मूढताम् ।
त्रैवर्गिका ह्यक्षणिका आत्मानं घातयन्ति ते ॥१७

भाः ११।५।१६

कैवल्यं तत्त्वज्ञानं असम्प्राप्ता अत्र हेतवः त्रैवर्गिकाः त्रिवर्गप्रधानाः अक्षणिकाः उपशान्तिक्षणरहिताः देहादिस्थैर्य्यबुद्धयो वा स्वयमेवात्मानं घातयन्ति । †

तदाह—

एत आत्महनोऽशान्ता अज्ञाने ज्ञानमानिनः ।
सीदन्त्यकृतकृत्या वै कालध्वस्तमनोरथाः ॥१८

भाः ११।५।१७

आत्महनः आत्मापह्नवकर्त्तारः अज्ञाने कर्म्मणि ।

तथाच(१)—

असूर्य्या नाम ते लोका अन्धेन तमसा वृताः ।
तां स्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥१९†

हित्वात्मन्ययासरचिता(२) गृहापत्य-सुहृत्-स्त्रियः ।
तमो विशन्त्यनिच्छन्तो वासुदेवपराङ्मुखाः ॥२०

भाः ११।५।१८

तथा एकादशाध्याये उद्धवं प्रति भगवद्वाक्यम् ।

यस्तु केवलं शब्दब्रह्मण्यभिज्ञः पाण्डित्यमात्रव्यवसायी न तु तदुक्तैः साधनैः तद्विज्ञो भवेत् तत्रिन्दति ।

शब्द ब्रह्मणि निष्णातो न निष्णायात् परे यदि ।
श्रमस्तस्य श्रमफलो ह्यधेनुमिव रक्षतः ॥२१

भाः ११।११।१८

शब्दब्रह्मण्यपि निष्णातः पारंगतोऽपि परे ब्रह्मणि न निष्णायात् ध्यानाद्यभियोगं न कुर्य्यात् तस्य शास्त्रश्रमः श्रमैकफलः न पुरुषार्थपर्य्यवसायी अधेनुं चिरप्रसूताम् ।

दशमे चतुरशीतितमे भगवद्वाक्यम् ।

अतः साधून् विहायान्यदा[illegible] सेवमानो अतिमन्द इत्याह—

यस्यात्मबुद्धिः कुणपे त्रिधातुके
स्वधीः कलत्रादिषु भौम इज्यधीः ।
यत्तीर्थबुद्धिः सलिले न कर्हिचित्
जनेष्वभिज्ञेषु स एव गोखरः ॥२२ *

भाः १०।८४।१३

यस्यात्मबुद्धिः अहमिति बुद्धिः [illegible] वातपित्तश्लेश्माणः प्रकृतयो यस्य तस्मिन् कुणपे शव-तुल्ये शरीरे स्वधीः स्वीया इति बुद्धिः भौमे भूविकारे इज्यधीः देवताबुद्धिः यस्य, सलिले तीर्थबुद्धिः अभिज्ञेषु तत्त्वविद्सु यस्यैता बुद्धयो न सन्ति स एव, गोष्वपि खरो दासः अत्यविवेकी, यद्वा [illegible] [illegible] तृणादिभारवाहकः । †

---

† स्वामिटीकैवानुसृता । (२) स्वात्म भू तिरिति मुद्रित स्वामिटीकायां पाठः । (३) [illegible] जायते पाठान्तरम् । * भक्तिरसामृतसिन्धौ २।४१

सप्तमे प्रह्लादवाक्यम् ।

विप्राद्द्विषड्गुणयुतादरविन्दनाभ
पादारविन्द विमुखात् श्वपचो वरिष्ठः ।
मन्ये तदर्पितमनोवचनेहितार्थ
प्राणं पुनाति सकुलं नतु भूरिमानः ॥२३ *

भाः ७।९।२०

धर्म्मश्च सत्यञ्च दमस्तपश्च
क्षमार्ज्जवं(१) ह्री-तितीक्षानुसया
यज्ञश्च दानञ्च धृतिः श्रुतिश्च(२)
व्रतानि वै द्वादश ब्राह्मणस्य ।

भाः ७।९।१० श्रीधरीटीकायाम् ।

एते द्वादश ब्राह्मणस्य गुणाः ।

बृहन्नारदीये—

हरिभक्तिविहीना ये जीवन्त्यपि मृतोपमाः ।
कर्म्मकारस्य भस्त्रेव श्वसन्नपि न जीवति ॥२४

वाच्यमानन्तु ये शास्त्रं वैष्णवं पुरुषाधमाः ।
न शृण्वन्ति मुनिश्रेष्ठ तेषां स्वामी सदा यमः ॥२५

न शृणोति हरेर्यस्तु कथां पापप्रणाशिनीम् ।
अचिरादेव राजर्षे ! स मूढः प्रविनश्यति ॥२६

षष्ठस्कन्धे भटान् प्रति यमवाक्यम् ।

के तर्हि दण्डार्थमानेया इत्याह—

तानानयध्वमसतो विमुखान्मुकुन्द-
पादारविन्दमकरन्दरसादजस्रं ।
निष्किञ्चनैः परमहंसकुलैरसङ्गैः
युष्टाद् गृहे निरयवर्त्मनि वद्धतृष्णान् ॥२७ *

भाः ६।३।२८

असतो दुष्टान् तानेवाह मुकुन्द पदारविन्दयोर्यो मकरन्दरूपो रसः तस्माद् विमुखान्, कथम्भूतात् निष्किञ्चनैः अजस्रं युष्टात्, तेषां ज्ञापकमेवाह निरयवर्त्मनि धर्म्मशून्य गृहे वद्धा तृष्णा यै स्तान् । †

किञ्च—

जिह्वा न वक्ति भगवद्गुणनामधेयं
चेतश्च न स्मरति तच्चरणारविन्दम् ।
कृष्णाय नो नमति यत् शिर एकदापि
तानानयध्वमसतोऽकृतविष्णुकृत्यान् ॥२८ *

भाः ६।३।२९

यद् येषां जिह्वा येषां मनः शिरश्च एकदापीति सर्व्वत्रान्वयः नकृतं विष्णुकृत्यं भगवद्व्रतं यैस्तान् ।

भगवद्गीतायां षोड़शे अर्ज्जुनं प्रति भगवद्वाक्यम् ।

तत्राभयं सत्त्वसंशुद्धिरित्यादिभिः त्रिभिः श्लोकैर्दैवीं सम्पदमुक्त्वा दम्भोदर्प इत्यादि श्लोकेनासुरीञ्च सम्पद् मुक्त्वा तत्रासुरीं सम्पदमाश्रित्य मां प्रद्विषन्तो ये यजन्ते, तेषां कदर्य्यस्वभावप्रच्युतिर्न भवतीत्याह द्वाभ्याम् ।

तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥२९

गीः १६।१९

तानहं द्विषतः संसारेषु जन्ममृत्युमार्गेषु अत्राप्यासुरीष्विव अतिक्रूरासु व्याघ्रसर्पादियोनिषु, अजस्रमनवरत क्षिपामि । तेषां पापकर्म्मणां तादृशं फलं ददामीत्यर्थः । †

---

† स्वामिटीकैवानुसृता । * भक्तिरत्नावल्याम् ७।१९ + ७।१७ + ३।२४ (१) 'मात्सर्य्यं ह्री'ति मुद्रितस्वामिटीकायां पाठः ।
(२) श्रुतञ्चेति मुद्रितस्वामिटीकायाम् ।

किञ्च—

आसुरीं योनिमापन्ना मूढ़ा जन्मनि जन्मनि।
मामप्राप्यैव कौन्तेय ! ततो यान्त्यधमांगतिं ॥३०

गीः १३।२०

मामप्राप्यैवैवकारेण मत्प्राप्तिशङ्कापि तेषां कुतः ? मत्प्राप्त्युपायं, सन्मार्गमप्राप्याधमां कृमिकीटादिगतिं यान्तीत्युक्तम्। †

तत्रैव नवमे भगवद्वाक्यम् नन्वेवंभूतं परमेश्वरं त्वां किमिति नाद्रियन्ते ? तत्राह द्वाभ्याम्।

अवजानन्ति मां मूढ़ा मानुषीं तनुमाश्रितम्।
परं भावमजानन्तो मम भूतमहेश्वरम् ॥३१

गीः ९।११

सर्व्वभूते श्रीमहेश्वरस्वरूपं मदीयं परमं तत्त्वं अवजानन्तो मूढ़ाः मामवमन्यन्ते। अवज्ञाने हेतुः, शुद्धसत्त्वमयीमपि तनुं भक्तेच्छावशात् मनुष्याकार-माश्रितवन्तम्। †

मोघाशा मोघकर्म्माणो मोघज्ञाना विचेतसः।
राक्षसीमासुरीञ्चैव प्रकृतिं मोहिनीं श्रिताः ॥३२

गीः ९।१२

मत्तः अन्यत् देवतान्तरं क्षिप्रं फलं दास्यत्येव-म्भूता मोघा निष्फला आशा येषां ते अतएव मद्विमुखत्वात् मोघानि व्यर्थानि कर्म्माणि येषां ते, मोघमेव नाना कुतर्काश्रितं शास्त्रज्ञानं येषां ते, अतएव विचेतसः विषयेषु विक्षिप्तचित्ताः सर्व्वत्र हेतुः, राक्षसीं तामसीं हिंसादिप्रचुरां आसुरीञ्च राजसीं कामदर्पादि-बहुलां मोहिनीञ्च बुद्धिभ्रंशकारीं प्रकृतिं स्वभावम् आश्रिताः सन्तः मामवजानन्तीति पूर्व्वेणान्वयः। †

वैष्णवानन्दलहरी—

यश्चात्मानं निबध्नाति कर्म्मभिः कोषकारवत्(१)
तस्य मुक्तिं न पश्यामि कल्पकोटिशतैरपि ॥३३

वैष्णवानन्दलहरी—अर्ज्जुनं प्रति भगवद्वाक्यम्।

भिक्षाशया न गृह्णन्ति मम नामानि चार्ज्जुन।
अदृश्यास्ते जनाः पार्थ ! दृष्टिमात्रेण वर्ज्जयेत् ॥३४

पद्मपुराणे—

स्वप्नेऽपि मम नामानि ये न गृह्णन्ति मानवाः।
अदृश्यास्ते जनाः पार्थ ! दूरतः परिवर्ज्जयेत् ॥३५

श्वपाकमिव विद्येत लोके विप्रमवैष्णवम्।
वैष्णवो वर्णवाह्योऽपि पुनाति भुवनत्रयम् ॥३६

पः पुः स्वर्गखण्डे

इत्यनेन कृष्णैकशरणतया तद्भक्त्यैव गतिर्नान्यथेति। अतः ये भगवद्भक्तिहीनाः ते दुष्कृतिनो जन्मजन्मनि संसारगर्त्ते पतन्तीति निर्णीतम्।

इति भक्तिरत्नाकरे त्रयोविंशमाहात्म्यम्।

---

## चतुर्विंशमाहात्म्यम्

अथ भगवद्भक्तद्वेषिणां गतिमाह—

एकादशे पञ्चमाध्याये चमसवाक्यम्।

अभक्तानां तेषां कर्म्माभिनिवेशात् कामक्रोधादयो वर्द्धन्त इत्याह—

रजसा घोरसङ्कल्पा कामुका अहिमन्यवः।
दाम्भिका मानिनः पापा विहसन्त्यच्युतप्रियान् ॥१

भाः ११।५।७

---

† स्वामिटीकैवानुसृता। (१) श्लोकोऽयं (क) पुस्तके न धृतः।

घोरः अभिचारादिसङ्कल्पो येषां ते, अहितवत् मन्युः येषां ते। †

मानितां प्रपञ्चयति—

श्रिया विभूत्याभिजनेन विद्यया
त्यागेन रूपेण बलेन कर्मणा।
जातस्मयेनान्धधियः सहेश्वरान्
सतोऽवमन्यन्ति हरिप्रियान् खलाः ॥२

भाः ११।५।३

श्रिया धनादिसम्पदा, विभूत्या ऐश्वर्य्येण श्रियादिना जातः स्मयो गर्व्वः तेन अन्धा धीर्येषां ते ईश्वरसहितान् सतः अवमन्यन्ते। †

चतुर्थस्कन्धे तृतीये सतीं प्रति महेश्वरवाक्यम्। ननु [illegible] [illegible] पितेति [illegible] [illegible], यतोऽसौ [illegible] द्वेष्टि [illegible] [illegible]—।

पापच्यमानेन हृदातुरेन्द्रियः
समृद्धिभिः पुरुषबुद्धिसाक्षिणाम्।
अकल्प एषामधिरोढुमञ्जसा
परं पदं द्वेष्टि यथाऽसुरा हरिम् ॥३

भाः ४।३।१६

पापच्यमानेन सन्तप्यमानेन हृदा आतुरेन्द्रियः पुरुषो जीवः तस्य बुद्धिः चित्तं तत्साक्षिणां निरहङ्कारिणामित्यर्थः, समृद्धिभिः पुण्यकीर्त्तिभिः। एषां पदं [illegible] [illegible] प्राप्तुम् [illegible] [illegible] सन् [illegible] द्वेष्टि, असुराः यथा हरिं द्विषन्ति। †

तत्र एकत्रिंशाध्याये(१) प्रचेतसं प्रति नारदवाक्यम्। हरिभक्तिनिन्दकानान्तु पूजामपि न गृह्णातीत्याह—

न भजति कुमनीषिणां स इज्यां
हरिरधनात्मधनप्रियो रसज्ञः।
श्रुतधनकुलकर्म्मणां मदैर्ये
विदधति पापमकिञ्चनेषु सत्सु ॥४

भाः ४।३१।१६

कुमनीषिणां कुत्सितबुद्धिनां इज्यां न भजति न गृह्णाति। किम्भूतो हरिः? अधनाश्च ते आत्मधनाश्च ते, भगवद्धना एव प्रिया यस्य, रसज्ञः भक्तिरसज्ञः। के कुमनीषिणस्तानाह, श्रुतेति एतन्मदैर्ये सत्सु पापं तिरस्कारं विदधति कुर्व्वन्ति। †

षष्ठस्कन्धे षोडशे चित्रकेतुं प्रति नारदवाक्यम्।

एतत् प्रपञ्चयति—

कः क्षेमो निजपरयोः कियान् वार्थः स्वपरद्रुहा धर्म्मेण।
स्वद्रोहात् तव कोपः परसंपीड़या च तथाऽधर्म्मः ॥५

भाः ६।१६।३८

कः क्षेमः किं कुशलं न किञ्चित्, निजपरयोः, स्वस्य परस्य वा स्वपरद्रुहा स्वस्मै परस्मै च द्रुह्यतीति स्वपरध्रुक् तेन, यतः स्वद्रोहादत्यन्तकायक्लेशात् तव कोपः पीड़ा सम्भवति। तदुक्तं—

कर्षयन्तः शरीरस्थं भूतग्राममचेतसः।
माञ्चैवान्तः शरीरस्थं तान् विद्ध्यासुरनिश्चयान् ॥
इति। तथा परसम्पीड़या अधर्म्मः, च शब्दात् तव कोपश्च। †

वैष्णवानन्दलहरी—

यो मे भक्तस्य निन्दार्थी न मे भक्तः स पार्थिव।
यो मे भक्तस्य प्रेमार्थी स एव परमो मम ॥६

---

† स्वामिटीकैवानुसृता। (१) [illegible] इति (क) पुस्तके पाठः।

परदाराः परद्रव्यं परिवादः परस्य च ।
स निर्लज्जः कथं ब्रूते पूजयामि जनार्द्दनम् ॥७

इत्यादि वचनानुसारेण तदेकशरणतया भगवद्भक्त्यैव गतिर्नान्यथेति निर्णीतम् ।

इति भक्तिरत्नाकरे चतुर्विंशमाहात्म्यम् ।

## पञ्चविंशमाहात्म्यम्

अथ भक्तानामङ्गप्रशंसामाह ।

नवमे चतुर्थाध्याये अम्बरीषोपाख्याने भक्तिमेवेन्द्रियाणां भगवत्परत्वकथनेन प्रशंसयति त्रिभिः ।

स वै मनः कृष्णपदारविन्दयोः
वचांसि वैकुण्ठगुणानुवर्णने ।
करौ हरेर्मन्दिरमार्ज्जनादिषु
श्रुतिंचकाराच्युतसत्कथोदये ॥१

भाः ९।४।१८

श्रुतिः श्रोत्रं अच्युतस्य सत्कथानामुदये श्रवणे चकार इत्यस्य सर्व्वत्रान्वयः । †

मुकुन्दलिङ्गालयदर्शने दृशौ
तद्भृत्यगात्रस्पर्शेऽङ्गसङ्गमम् ।
घ्राणञ्च तत्पादसरोजसौरभे
श्रीमत् तुलस्या रसनां तदर्पिते ॥२

भाः ९।४।१९

मुकुन्दस्य लिङ्गानामालयानि स्थानानि तेषां दर्शने दृशौ नेत्रे, श्रीमत्यास्तुलस्याः तत्पादसरोजेन यत् सौरभं तस्मिन् तदर्पिते तस्मै निवेदिते अन्नादौ । †

पादौ हरेः क्षेत्र पदानुसर्पणे
शिरो हृषीकेशपदाभिवन्दने ।
कामञ्च दास्ये न तु कामकाम्यया
यथोत्तमश्लोकजनाश्रया रतिः ॥३

भाः ९।४।२०

कामं स्रक्चन्दनादिसेवां दास्ये निमित्ते तत्प्रसादस्वीकाराय न तु कामकाम्यया विषयभोगेच्छया । कथं चकार उत्तमश्लोकजनाश्रया रतिर्यथा भवेत् तथा, अनेन च तद्भक्तेषु परं भावं प्राप्त इत्येतत् स्फुटीकृतम् । †

दशमे अशीतितमे परीक्षिद्वाक्यम् । कथाश्रवणं स्तुवन् दृष्टान्ततयान्यार्थानाह ।

सा वाग्यया तस्य गुणान् गृणीते
करौ च तत्कर्म्मकरौ मनश्च यत् ।
स्मरेद् वसन्तं स्थिरजङ्गमेषु
शृणोति तत्पुण्यकथाः स कर्णः ॥४ *

भाः १०।८०।३

शिरस्तु तस्योभयलिङ्गमानमेत्
तदेव यत् पश्यति तद्धि चक्षुः ।
अङ्गानि विष्णोरथ तज्जनानां
पादोदकं यानि भजन्ति नित्यम् ॥५ *

भाः १०।८०।४

तावेवकरौ यौ तत्कर्म्मकरौ, तदेव मनः यत्स्थिरजङ्गमेषु वसन्तं तं स्मरेत्, यः तस्य पुण्याः कथाः शृणोति, स एव कर्णः, उभयलिङ्गं स्थिरं जङ्गमञ्च तस्यैव लिङ्गमिति मत्वा नमेत्, तदेव शिरः । तदेव तस्य लिङ्गमित्येव यत् पश्यति तदेव चक्षुः अङ्गानि तानि तस्य पादोदकं यानि भजन्ति । †

---

† स्वामिटीकैवानुसृता । * भक्तिसन्दर्भमपि ३२९-३३०

तथा—

सा जिह्वा या हरिं स्तौति तच्चित्तं यत्तदर्पितम् ।
तावेव केवलौ श्लाघ्यौ यौ तत्पूजाकरौ करौ ॥६

इत्यादि वचनानुसारेण कृष्णैकशरणतया सेवामात्रेण मुक्तिमाप्नोति । ये तु पुनः समस्तेन्द्रियैर्भजन्ति तेषां किं वक्तव्यमिति निर्णीतम् ।

इति भक्तिरत्नाकरे पञ्चविंशमाहात्म्यम् ।

---

## षड्विंशमाहात्म्यम्

इदानीं भक्तानां जन्मकर्म्म प्रशंसामाह ।

चतुर्थस्कन्धे एकोनत्रिंशत्तमे प्राचीनवर्हिषं प्रति· नारदवाक्यम् । नारदः स्वयं कृपया तत्त्वं निरुपयति ।

तत् कर्म्म हरितोषं यत् सा विद्या तन्मतिर्य्यया ।
हरिर्देहभृतामात्मा स्वयं प्रकृतिरीश्वरः ॥१ *

भाः ४।२९।५०

हरिं तोषयतीति हरितोषं यत् तदेव कर्म्म, यया तस्मिन् हरौ मतिर्भवति सैव विद्या, कुतः? इत्यपेक्षायां हरेः परमफलत्वं दर्शयन्नाह । हरिः देहभृतामात्मा ईश्वरश्च, तत्र हेतुः, स्वयं स्वातन्त्र्येन प्रकृतिः कारणम् । †

तत्र शेषाध्याये नारदवाक्यम्—

तज्जन्म तानि कर्म्माणि तदायुस्तन्मनो वचः ।
नृणां येन हरिः स्वात्मा सेव्यते हरिरीश्वरः ॥२

भाः ४।३१।९

यतो जन्मादेः हरिसेवैव फलं अतः तद्विहीनं सर्व्वं व्यर्थमिति भावः । †

विष्णुपुराणे प्रह्लादवाक्यम् ।

तत्कर्म्म यन्नबन्धाय सा विद्या या विमुक्तये ।
आयासायापरं कर्म्म विद्यान्या शिल्पनैपुणम् ॥३

विः पुः १।१९।४१

प्रथमे नारदवाक्यम् । अनेन तपआदि सर्व्वं सफलं स्यादित्याह ।

इदञ्च पुंसः तपसः श्रुतस्य वा
स्विष्टस्य मुक्तस्य च बुद्धदत्तयोः ।
अविच्युतोऽर्थः कविभिर्निरूपितः
यदुत्तमश्लोकगुणानुवर्णनम् ॥४ *

भाः १।५।२२

श्रुतादयो भावे निष्ठा, इदमेव हि तपःश्रुतादेः अविच्युतो नित्योऽर्थः, फलं, किं तत्? उत्तमश्लोक-गुणानुवर्णनमिति यत् । †

तथाद्वितीयाध्याये सूतवाक्यम् ।

ऐकान्तिकं श्रेयो ब्रूहि इत्यस्योत्तरमाह—
स वै पुंसां परो धर्म्मो यतो भक्तिरधोऽक्षजे
अहैतुक्यप्रतिहता ययात्मा सुप्रसीदति ॥५ *

भाः १।२।६

अयमर्थः—धर्म्मो; द्विविधः प्रवृत्तिलक्षणो निवृत्ति-लक्षणश्च, तत्र यः स्वर्गाद्यर्थः प्रवृत्तिलक्षणः सोऽपरः, यतस्तु धर्म्मात् अधःक्षजादराविलक्षणा भक्तिर्भवति सः

सः परो धर्म्मः। श्रेस वै ऐकान्तिकं श्रेय इति। कथम्भूता? अहैतुकी हेतुः फलाभिसन्धानं तद्रहिता अप्रतिहता विघ्नैरनभिभूता। †

धर्म्मस्यफलं हरिभक्तिः नार्थकामादिकम् इममर्थं उपपाद्य उपसंहरति।

अतः पुंभिर्द्विजश्रेष्ठाः वर्णाश्रमविभागशः।
स्वानुष्ठितस्य धर्म्मस्य संसिद्धिर्हरितोषणम् ॥६

भाः १।२।१३

हे द्विजश्रेष्ठाः! हरितोषणं हरेराराधनं संसिद्धिः फलं।

विष्णुपुराणे—

जीवनं विष्णुभक्तस्य वरं पञ्चदिनान्यपि।
न तु कल्पसहस्राणि भक्तिहीनस्य दुर्म्मतेः ॥७

अपि शब्दाद्दिनद्वयं दिनैकम्वा।

द्वितीये प्रथमाध्याये शुकवाक्यम्। अल्पमेवायुरवशिष्टं किमहं साधयामीति माशुच इत्याह।

किं प्रमत्तस्य बहुभिः परोक्षैर्हायनैरिह।
वरं मुहूर्त्तं विदितं घटते श्रेयसे यतः ॥८

भाः २।१।१२

परोक्षैरलक्षितैः हायनैर्वत्सरैः किञ्चिदितं वृथैवायुर्यातीतिशातं येन ज्ञातेन घटते यत्नं करोति। †

दशमे अष्टत्रिंशे अक्रूरवाक्यम्। ननु सर्व्वाहङ्कार-रहितस्यात्मारामस्य लीला कुतः इत्याशङ्क्य परानुग्रहार्थ-मेवेत्याशयेनाह।

यस्याखिलामीवहभिः सुमङ्गलैः
वाचो विमिश्रा गुणकर्म्मजन्मभिः।
प्राणन्ति शुम्भन्ति पुनन्ति वै जगद्
यास्तद्विरक्ताः शवशोभना मताः ॥९

भाः १०।३८।१२

अखिलामि अखिलस्य वा अमीवानि पापानि घ्नन्तीति अखिलामीवहानि तैः, यथा सुमङ्गलैः शोभनानि मङ्गलानि येभ्यस्तैः गुणाः करुणादयः कर्म्माणि च जन्मानि च तैर्व्विमिश्रा युक्ताः वाचः जगत् प्राणन्ति जीवयन्ति शुम्भन्ति शोभयन्ति पुनन्ति पवित्रयन्ति। व्यतिरेकमाह— या इति तैर्व्विरक्ताः रहिताः तास्तु स्वलंकृता अपि वस्त्राद्यलङ्कृतशववत् शोभमाना मताः सतां सम्मताः।

इत्यादि वचनानुसारेण कृष्णैकशरणतया तद्भक्त्यैव सर्व्वेषां जन्मकर्म्मादि सफलं मोक्षश्च तद्व्यतिरेकेण व्यर्थं इति निर्णीतम्। †

इति भक्तिरत्नाकरे षड्विंशमाहात्म्यम्।

---

## सप्तविंशमाहात्म्यम्

इदानीं हरिभक्तिहीनपरमाज्ञानिनां जन्मकर्म्मशतियो-गादिनिन्दामाह।

हरिसेवां विना जन्मादिकं व्यर्थं भवति, तत्राह—

किं जन्मभिस्त्रिभिर्व्वेह शुक्ल(१) सावित्र्ययाज्ञिकैः।
कर्म्मभिर्वा त्रयीप्रोक्तैः पुंसोऽपि विबुधायुषा ॥१

भाः ४।३१।१०

शुक्लं विशुद्धं(२) मातापितृभ्यां उत्पत्तिः, सावित्र्यं उपनयनेन, याज्ञिकं दीक्षाया, विबुधानामिव देवानामिव दीर्घायुषापि किं न किमपीत्यर्थः। †

---

† स्वामिटीकैवानुसृता। (१) शौक्ले ति मुद्रितभागवते पाठः। (२) शुक्लसम्बन्धि विशुद्धे ति मुद्रितभागवतटीका।

श्रुतेन तपसा किं वा वचोभिश्चित्तवृत्तिभिः ।
बुद्ध्या वा किं निपुणया बलेनेन्द्रियराधसा ॥२

भाः ४।३१।१०

किं वा योगेन साङ्ख्येन न्यासस्वाध्याययोरपि ।
किं वा श्रेयोभिरन्यैश्च न यत्रात्मप्रदो हरिः ॥३

भाः ४।३१। ९

वचोभिर्वाग्विलासैः, चित्तवृत्तिभिः नानाविधानसामर्थ्यैः इन्द्रियानां राधसा पाटवेन, योगेन प्राणायामादिना, साङ्ख्येन देहादिव्यतिरिक्तात्मज्ञानमात्रेन च, न्यासः सन्न्यासः तेन स्वाध्यायः वेदाध्ययनम्, अन्यैरपि व्रतदानतीर्थवैराग्यादिभिः श्रेयः साधनैः किं यत्र येषु आत्मप्रदो हरिर्नास्ति । †

दशमे त्रयोविंशे ब्राह्मणानां वाक्यम् ।

जन्मादिनिन्दामाहुः—

धिग्जन्म नः त्रिवृत् यत्तत् धिग्व्रतं धिग् बहुज्ञताम् ।
धिक्कुलं धिक्क्रियादाक्ष्यं विमुखा ये त्वधोऽक्षजे ॥४

भाः १०।२३।३९

त्रिवृत् शौक्रं सावित्र्यं दैक्षमिति, त्रिगुणितं जन्म, व्रतं ब्रह्मचर्य्यं, क्रियाः कर्म्माणि, दाक्ष्यं च, क्रियादाक्ष्यं इत्येकं वा पदं, धिगित्याक्षेपे ये वयमधोक्षजे विमुखाः तेषां जन्मादिसर्व्वं तद् धिगिति व्यगर्हयन्नित्यर्थः । †

श्रुतिस्तुतौ—

तपन्तु तापैः प्रपतन्तु पर्व्वता-
दटन्तु तीर्थानि पठन्तु चागमान् ।
यजन्तु यज्ञैस्तु विदन्तु योगैः(१)
विना हरिं नव मृतिं तरन्ति ॥५

भाः १०।८७।२७ श्रीधरटीका

ब्रह्मस्तुतौ—

भक्तिं विना ज्ञानं नैव सिद्ध्येदित्याह—

श्रेयः स्रुतिं भक्तिमुदस्य ते विभो
क्लिश्यन्ति ये केवल बोधलब्धये ।
तेषामसौ क्लेशल एव शिष्यते
नान्यद् यथास्थूलतुषावघातिनाम् ॥६ *

भाः १०।१४।४

श्रेयसामभ्युदयापवर्गलक्षणानां स्रुतिः सरणं यस्याः सरस इव निर्झराणां तां ते तव भक्तिमुदस्य त्यक्त्वा श्रेयसां मार्गभूतामिति वा तेषां क्लेशलः क्लेशः एवावशिष्यते। अयं भावः; यथा स्वल्पप्रमाणं धान्यं त्यक्त्वा अन्तःकणहीनान् स्थूलधान्याभासान् तुषानेवावघ्नन्ति तेषां न किञ्चित् फलं, एवं भक्तिं तुच्छीकृत्य ये केवलबोधाय प्रयतन्ते तेषामपीति । †

प्रथमस्कन्धे सूतवाक्यम् । व्यतिरेकमाह—

धर्म्मः स्वनुष्ठितः पुंसां विष्वक्सेनकथासु यः ।
नोत्पादयेद् यदि रतिं श्रम एव हि केवलम् ॥७ *

भाः १।२।८

यो धर्म्म इति प्रसिद्धः यदि स विष्वक्सेनस्य कथासु रतिं नोत्पादयेत् तर्हि स्वनुष्ठितोऽपि सन् सः श्रमो श्रेयः । ननु मोक्षार्थस्यापि धर्म्मस्य श्रमत्वमस्त्येव अत आह केवलं निष्फलः श्रम इत्यर्थः । नन्वस्ति तत्रापि स्वर्गादिफलं इत्याशङ्क्य एवकारेण निराकरोति क्षयिष्णुत्वात् न तत् फलमित्यर्थः । ननु चातुर्म्मास्ययाजिनः अक्षय्यं सुकृतं

† स्वामिटीकैवानुसृता । * भक्तिसन्दर्भानुच्छेद १।६४+४।३ (१) विन्दन्तु यागैः इति मुद्रित पुस्तके पाठान्तरम् ।

भवतीति श्रुतेः(१) न तत्फलस्य क्षयिष्णुत्वं इत्याशङ्क्य हि शब्देन साधयति तद् यथा इत्यादि श्रुतिः(२)।

तत्रैव पञ्चमाध्याये व्यासं प्रति नारदवाक्यम्।

पूर्व्वश्लोके नित्य नैमित्तिकादिधर्म्ममनादृत्य केवलं हरिभक्तिरेवोपदेष्टव्या इत्युक्तम्, इदानीं तद् विपक्षे दोषमाह। †

ततोऽन्यथा किञ्चन यद् विवक्षतः
पृथग्दृशस्तत्कृतनामरूपभिः।
न कर्हिचित् क्वापि च दुःस्थिता मति
र्लभेत वाताहतनौरिवास्पदम् ॥८ *

भाः १।५।१४

उरुक्रमविचेष्टितात् पृथग्दृशः अतएवान्यथा प्रकारेण यत्किञ्चिदर्थान्तरं विवक्षतः तया विवक्षया कृतैः स्फुरितैः रूपैर्नामभिश्च वक्तव्यत्वेनोपस्थितैः दुःस्थिता अनवस्थिता सती मतिः कदाचित् क्वापि विषये आस्पदं स्थानं न लभेत, वातेन आहता आघूर्णिता नौरिव। तदुक्तं गीतायाम्—व्यवसायात्मिका बुद्धिरिति(७)।

तथा भक्तिहीनं कर्म्म बन्धनमेवेति कैमुतिकन्यायेनाह—

नैष्कर्म्म्यमप्यच्युतभाववर्जितं
न शोभते ज्ञानमलं निरञ्जनम्।
कुतः पुनः शश्वदभद्रमीश्वरे
न चार्पितं कर्म्म यदप्यकारणम् ॥९ *

भाः १।५।१२

नैष्कर्म्म्यं निष्कर्म्म ब्रह्म तदेकाकारत्वात् निष्कर्म्मतारूपं नैष्कर्म्म्यं अज्यते अनेनेति अज्ञानमुपाधिः तन्निवर्त्तकं निरञ्जनं एवम्भूतमपि ज्ञानं अच्युतभावो भक्तिः तद् वर्जितं चेत् अलं अत्यर्थं न शोभते सम्यगपरोक्षाय न कल्पते इत्यर्थः। तदा शश्वत् साधनकाले फलकाले चाभद्रं दुःखरूपं यत् काम्यं कर्म्म यदप्यकारणमकाम्यं तच्चेति चकारस्यान्वयः, तदपि कर्म्म ईश्वरे नार्पितं चेत् कुतः पुनः शोभते? वहिर्मुखत्वेन सत्त्वशोधकत्वाभावात्। †

एकादशे भगवद्वाक्यम्। असंयमने दोषमाह—

यो वै वाङ्मनसी सम्यगसंयच्छन् धिया यतिः।
तस्य व्रतं तपो दानं स्रवत्यामघटाम्बुवत् ॥१०

भाः ११।१६।४३

असंयच्छन् न संयच्छति। †

नरसिंहपुराणे—

भगवति विमुखस्य न चास्ति सिद्धिः
विषममृतं भवतीति नेदमस्ति।
खलु वर्षशतमपीह पच्यमानं
व्रजति न काञ्चनतामयः कदाचित् ॥११

नृः पुः ३।४

वैष्णवानन्दलहरी—

तिष्ठन्ति मम नामानि तिष्ठन्ति वदनानि च।
तथापि नरके घोरे पतन्ति वालिशाः सर्व्वे ॥१२

बृहन्नारदीये—

अहो चित्रमहो चित्रमहो चित्रमिदं द्विजाः।
हरेर्नाम्नि स्थिते लोकः संसारे वर्त्तते पुनः ॥१३

बृः नाः पुः ३२।४१

(१) नन्वसम्यं ह्वं चातुर्म्मास्ययाजिनः सुकृतं भवतीति स्वामिटीकायाम्। (२) तद् यथेह कर्म्मजितो लोकः क्षीयते एवमेवामुत्र पुण्यजितो लोकः क्षीयते इति तर्कानुगृहीतया श्रुत्या स्वविष्य त्वप्रतिपादनात्। इति स्वामिटीका। (३) सुधिया श्रीधरटीकायां समग्रोऽयंश्लोक उपन्यस्तः। † स्वामिटीकैवानुसृता। भक्तिरत्नावल्याम् ५।७+१।१०६

अहो मौर्ख्यमहो मौर्ख्यमहो मौर्ख्यं दुरात्मनाम् ।
हृत्पद्मे संस्थितं विष्णुं नाभिजानन्ति सर्व्वदा ॥१४

बृः नाः पुः ३२।६२

अहो धैर्य्यमहो धैर्य्यमहो धैर्य्यं दुरात्मनाम् ।
विष्णौ स्थिते जगन्नाथे न भजन्ति मदोद्धताः ॥१५

बृः नाः पुः ३२।५७

यः कश्चिदपि धर्म्मात्मा हरिभक्तिपरो भवेत् ।
नान्यधर्म्मरतं दृष्ट्वा सर्व्वेऽसूयां प्रकुर्व्वते ॥१६

इत्यादि वचनानुसारेण कृष्णैकशरणतया तद्भक्त्यैव गतिर्नान्यथेति निर्णीतम् ।

इति भक्तिरत्नाकरे सप्तविंशमाहात्म्यम् ।

---

## अष्टाविंशमाहात्म्यम्

अथेदानीं वृथाकथाकथने दोषमाह ।

प्रथमे पञ्चमाध्याये नारदवाक्यम् ।

वासुदेव व्यतिरिक्तान्यविषयज्ञानवदेवान्यविषयवाक्चातुर्य्यञ्चाखिलमेवेत्याह—

न यद्वचश्चित्रपदं हरेर्यशो
जगत् पवित्रं प्रगृणीत कर्हिचित् ।
तद्वायसं तीर्थमुशन्ति मानसा
न यत्र हंसा निरमन्त्युशिक्क्षयाः ॥१ *

भाः १।५।१०

चित्रपदमपि यद्वचः हरेर्यशो न प्रगृणीत तद् वायसं तीर्थं, काकतुल्यानां कामिनां रतिस्थानं उशन्ति मन्यन्ते । कुतो मानसाः सत्त्वप्रधाने-मनसि वर्त्तमानाः हंसाः यतयः यत्र न निरमन्ति कर्हिचिदपि नितरां न रमन्ते । उशिक् कमनीयं ब्रह्म क्षयो निवासो येषां ते । यथा प्रसिद्धाः हंसाः मानसे सरसि चरन्तः कमनीय-पद्मषण्डनिवासाः, त्यक्तविचित्रान्नादियुक्तेऽपि उच्छिष्टगर्त्ते काकक्रीडास्थाने न रमन्त इति शेषः । †

षोड़शाध्याये शौनकवाक्यम् । कृष्णकथाश्रयं वैष्णवाश्रयं वा भवति तर्हि कथ्यतां न चेत् तर्हि न कथ्यतामित्याह ।

किमन्यैरसदालापैरायुषो यदसद्व्ययः ।
क्षुद्रायुषां नृणामङ्ग मर्त्यानामृतमिच्छताम् ॥२

भाः १।१६।७

किमन्यैरसदालापैः यत्र, यैः आयुषः वृथाक्षयः, क्षुद्रं अल्पायुर्येषां अतो मर्त्यानां मरणधर्म्मवतां, तथापि ऋतं सत्यं मोक्षमिच्छतां असदालापैर्न-किमपीत्यर्थः ।

द्वादशे सूतवाक्यम् । हरिकीर्त्तनमेव महाफलं तद्व्यतिरिक्तं सर्व्वं मिथ्यालापमिति प्रपञ्चयति ।

मृषा गिरस्ताह्यसतीरसत् कथाः
न कथ्यते यद्भगवानधोऽक्षजः ।
तदेव सत्यं तदुहैव मङ्गलं
तदेव पुण्यं भगवद्गुणोदयम् ॥३ *

भाः १२।१२।४६

तदेव रम्यं रुचिरं नवं नवं
तदेव शश्वन्मनसो महोत्सवम् ।
तदेव शोकार्णवशोषणं नृणां
यदुत्तमश्लोकयशोऽनुगीयते ॥४ *

भाः १२।१२।५०

---

† स्वामिटीकैवानुसृता । * भक्तिसन्दर्भवाक्यम् ५१५+५१२+५१३

मृषागिरः मिथ्यावाचः, असतीः असत्यः, असतां कथा यासु ताः यत् यासु उत्तमश्लोकस्य यशोऽनुगीयते यत् तदेव सत्यं तदेव हि मङ्गलं तत् उह इति हर्षे, भगवद्गुणानाम् उदयो यस्मात् तत् नवं नवं भवति तथा रुचिरं रुचिरप्रदं, मनसो महानुत्सवो यस्मात्। +

शान्तिशतके—

अथेश्वराणामीश्वरं हरिं ये न भजन्ति तान् निन्दयन्नाह—

नाथे श्रीपुरुषोत्तमे त्रिजगतामेकाधिपे चेतसां
सेव्ये स्वस्य पदस्य दातरि सुरे नारायणे तिष्ठति।
यं कंचित् पुरुषाधमं कतिपयग्रामेशमल्पार्थदं
सेवायै मृगयामहे नरमहो मूढा वराका वयम्॥४

शान्तिशतके—११

मृगयामहे अन्वेषयामः, वराका वयं शोच्याः।

इत्यादि वचनानुसारेण कृष्णैकशरणतया कुकथां त्यक्त्वा कृष्णकथाः शृण्वन्ति ये तेषां मुक्तिर्भवतीति निर्णीतम्।

इति भक्तिरत्नाकरे अष्टाविंशमाहात्म्यम्।

## ऊनत्रिंशमाहात्म्यम्

अथाभक्तानामङ्गनिन्दामाह।

द्वितीये तृतीये शौनकादिवाक्यम्। अभक्तस्याङ्गानि च निष्फलानि इत्याह पञ्चभिः।

बिले बतोरुक्रमविक्रमान् ये
न शृण्वतः कर्णपुटे नरस्य।
जिह्वा सती दार्दुरिकेव सूत!
नचोपगायत्युरुगायगाथाः॥१ *

२।३।२०

बतेति खेदे, न शृण्वतः यस्य ये कर्णपुटे ते बिले वृथारन्ध्रे, नचेदुपगायति तस्य जिह्वा असती, दुष्टा दर्दुरो भेकः तदीयाजिह्वेव। +

भारः परं पट्टकिरीटजुष्ट-
मप्युत्तमाङ्गं न नमेन्मुकुन्दम्।
शावौ करौ नो कुरुतः सपर्य्यां
हरेर्लसत् काञ्चनकङ्कणौ वा॥२ *

भाः २।३।२१

पट्टवस्त्रोष्णीषेण किरीटेन च युक्तमपि शिरो मुकुन्दं यदि न नमेत् तर्हि केवलं भार एव। शावौ मृतकः तत्करतुल्यौ लसन्ति काञ्चनानि कङ्कणानि(१) ययोस्तौ; अप्यर्थे वा शब्दः। +

बर्हायिते ते नयने नराणां
लिङ्गानि विष्णोर्न निरीक्षतो ये।
पादौ नृणां तौ द्रुमजन्मभाजौ
क्षेत्राणि नानुव्रजतो हरेर्यौ॥३ *

भाः २।३।२२

ये नयने विष्णोर्मूर्त्तीर्न निरीक्षेते ते बर्हायिते मयूरपुच्छनेत्रतुल्ये, द्रुमजन्मभाजौ, द्रुमवज्जन्म भजेते इति तथा वृक्षमूलतुल्यावित्यर्थः। +

जीवञ्छवो भागवताङ्घ्रिरेणुं
न जातु मर्त्योऽभिलभेत यस्तु।

+ स्वामिटीकैवानुसृता। * भक्तिरत्नावल्याम् ३।२५+३।२६+३।२७। (१) काञ्चन कङ्कणानि ययोस्तौ इति मुद्रितस्वामिटीकायां पाठः।

श्रीविष्णुपद्या मनुजस्तुलस्याः
श्वसञ्छवो यस्तु न वेद गन्धम् ॥४ *

भाः २।३।२३

नाभिलमेव अभितो न स्पृशेत् न धारयेत्, श्रीविष्णुपद्याः श्रीविष्णुपदलग्नायाः, न वेदेति अवघ्राय नाभिनन्देदित्यर्थः। +

तदश्मसारं हृदयं वतेदं
यद् गृह्यमाणैर्हरिनामधेयैः।
न विक्रियेताथ यदा विकारो
नेत्रे जलं गात्ररुहेषु हर्षः ॥५

भाः २।३.२४

अश्मसारं अश्मवत् सारो वलं काठिन्यं यस्य, विक्रियालक्षणमाह—अथेति, गात्ररुहेषु रोमसु हर्षः उद्गमः। +

इत्यनेन कृष्णैकशरणतया तद्भक्ताः सुखेन निस्तरन्तीत्युक्तं। ये त्वभक्ताः विषयविनिवेशितचित्तास्तेऽधोगच्छन्तीति निर्णीतम्।

इति भक्तिरत्नाकरे ऊनत्रिंशमाहात्म्यम्।

---

## त्रिंशमाहात्म्यम्

अथ प्रवृत्तिमार्गनिन्दामाह।

एकादशे एकविंशे उद्धवं प्रति भगवद्वाक्यम्। यथाश्रुतप्रवृत्तिपरतां वेदस्य निराकर्त्तुं प्रवृत्तिमार्गस्यानर्थहेतुतां चतुर्भिः प्रपञ्चयति।

विषयेषु गुणाध्यासात् पुंसः सङ्गस्ततो भवेत्।
सङ्गात्तत्र भवेत् कामः कामादेव कलिर्नृणाम् ॥१

भाः ११।२१।२६

सङ्गः आसक्तिः, तत्र तेषु विषयेषु येन प्रतिहन्यते कामः तेन सह कामादेव कलिः कलहो विवादः। +

कलेर्दुर्विषहः क्रोध स्तमस्तमनुवर्त्तते।
तमसा ग्रस्यते पुंसः चेतना व्यापिनी द्रुतम् ॥२

भाः ११।२१।२०

दुर्विषहः तीव्रः तमः सन्मोहः, तं क्रोधं, चेतना कार्य्याकार्य्यस्मृतिः द्रुतं शीघ्रम्। +

तया विरहितः(१) साधो! जन्तुः शून्याय कल्पते।
ततोऽस्य स्वार्थविभ्रंशो मूर्च्छितस्य मृतस्य च ॥३

भाः ११।२१।२१

शून्याय कल्पते असत्तुल्यो भवतीत्यर्थः। स्वार्थविभ्रंशः पुरुषार्थहानिः, मूर्च्छितस्य मृततुल्यस्य। +

तत्तुल्यत्वं(२) प्रपञ्चयति—

विषयाभिनिवेशेन नात्मानं वेद नापरम्।
वृक्षजीविकया जीवम् व्यर्थं भस्त्रेव यः श्वसन् ॥४

भाः ११।२१।२२

व्यर्थं वृक्षजीविकयैव यो जीवन् वर्त्तते, स मूर्च्छिततुल्यः, अतएव भस्त्रेव श्वसन् वर्त्तते स मृततुल्यः। अतः स्वार्थनाश इत्यर्थः। +

ननु प्रवृत्तस्य स्वर्गादि फलश्रवणात् कुतः स्वार्थविभ्रंशः तत्राह—

---

* भक्तिरत्नावल्याम् ३।२८ + स्वामिटीकैवानुसृता। (१) 'तया च रहित' इति मुद्रितभागवते पाठः। (२) तत्तत्तुल्यत्वे इति मुद्रितस्वामिटीका।

फलश्रुतिरियं नृणां न श्रेयो रोचनं परम्।
श्रेयोविवक्षया प्रोक्ता यथा भैषज्यरोचनम् ॥५

भाः ११।२१।२३

इयं फलश्रुतिर्न श्रेयः, परमपुरुषार्थपरा न भवतीत्यर्थः। किन्तु वहिर्मुखानां नृणां मोक्षविवक्षया अवान्तरफलैः कर्म्मसु रुच्युत्पादनमात्रम्। यथा भैषज्ये औषधे रोचनं रुच्युत्पादनम्। तथाहि—

"पिव निम्वं प्रदास्यामि खलु ते खण्डलड्डुकान्।
पित्रैव मुक्तः पिवति न फलं तावदेव तु" ॥
किन्तु आरोग्यम्। ततः किमत आह—†

एवं पुष्पितया वाचा व्याक्षिप्तमनसां नृणाम्।
मानिनां चातिलुब्धानां मद्वार्त्तापि न रोचते ॥६

भाः ११।२१।३४

अतो मत्प्रवणत्वाभावात् नित्यं संसारिणो भवन्तीतिभावः। एवं तावद् ये प्रवृत्तिपरा एकशरणतया हरिं न भजन्ति ते नित्यं संसारगर्त्ते तिष्ठन्तीति निर्णीतम्।

इति भक्तिरत्नाकरे त्रिंशमाहात्म्यम्।

---

## एकत्रिंशमाहात्म्यम्

अथ स्वर्गादिसुखनिन्दामाह।

एकादशे दशमे उद्धवं प्रति भगवद्वाक्यम्। एवमस्मिंल्लोके सुखं, नास्तीत्युक्तं। न देहिनामित्यादि-श्लोकैर्लोकान्तरेऽपि मयैवेत्याह।

श्रुतञ्च दृष्टवद् दुष्टं स्पर्द्धासूयात्ययव्ययैः।
वह्वन्तरायकामत्वात् कृषिवच्चापि निष्फलम् ॥१

भाः ११।१०।२०

श्रुतं स्वर्गादि, तदपि दुष्टं(१), स्पर्द्धा परसुखासहनम् असूया परगुणे दोषाविष्करणं, अत्ययः नाशः, व्ययः अपक्षयः, तैर्दुष्टम्। यद्वा व्ययो नाशः, अत्ययः अन्यस्यातिशयः, तं दृष्ट्वा तदप्राप्त्या दुःखमित्यर्थः। किञ्च वहवो अन्तराया वैगुण्यादिरूपा विघ्ना यस्मिन् कामे सुखे स कामो यस्मिन् तस्य भावस्तत्वं तस्यात्। कृषिर्यथा वहुविघ्ना तद्वत्। वहुसुखत्वेन श्रुतमपि निष्फलम्। †

विघ्नवैगुण्याद्यभावमङ्गीकृत्यापि नाशे दुःखं दुष्परिहरमित्याह पञ्चभिः।

अन्तारायैरविहतो यदि धर्म्मः स्वनुष्ठितः।
तेनापि निर्जितं स्थानं यथा गच्छति तत् शृणु ॥२

भाः ११।१०।२१

निर्जितं साधितम्। †

इष्ट्वेह देवता यज्ञैः स्वर्लोकं याति याज्ञिकः।
भुञ्जीत देववत् तत्र भोगान् दिव्यान् निजार्जितान् ॥३

भाः ११।१०।२२

यज्ञैर्देवता इन्द्रादिरूपा इष्ट्वा। †
स्वपुण्योपचिते शुभ्रे विमान उपगीयते।
गन्धर्व्वैर्विहरन् मध्ये देवीनां हृद्यवेशधृक् ॥४

भाः ११।१०।२३

स्वपुन्यैरुपचिते सर्व्वभोगसम्पन्ने देवीनां मध्ये विहरन् गन्धर्व्वैरुपगीयते। †

---

† स्वामिटीकैवानुसृता। (१) दुःखमिति मुद्रितस्वामिटीकायाम्।

स्त्रीभिः कामगयानेन किङ्किणीजालमालिना ।
क्रीड़न् न वेदात्मपातं सुराक्रीड़ेषु निर्वृतः ॥५

भाः ११।१०।२४

कामेनेच्छया गच्छता विमानेन किङ्किणीजाल-मालिना क्षुद्रघण्टिकासमूहशोभिना सह स्त्रीभिः सुराक्रीड़ेषु नन्दनादिषु क्रीड़न् आत्मपातं न वेद । ‡

तावत्(१) प्रमोदते स्वर्गे यावत् पुण्यं समाप्यते ।
क्षीणपुण्यः पतत्यर्वागनिच्छन् कालचालितः ॥६

भाः ११।१०।२५

कालेन चालितः पातितः । †

किञ्च—

पशूनविधिनालभ्य प्रेतभूतगणान् यजन् ।
नरकानवशो जन्तुर्गत्वा यात्युल्वनं तमः ॥७

भाः ११।१०।२७

दुष्टजनप्रलोभितः धनाद्यर्थं पशून् अविधिना हत्वा नरकान् गत्वा पुनः उल्वनं दुर्घोरं तमः स्थावरतां याति । विध्यलङ्घने स्वर्गादिप्राप्तिः, उल्लङ्घने तु स्थावरतां यातीति ।

एवं ये तु केवलं स्वर्गाद्यर्थं कर्म्मनिरता एकशरणतया कृष्णं न भजन्ति ते संसारतापे नित्यं पतन्तीति निर्णीतम् ।

इति भक्तिरत्नाकरे एकत्रिंशमाहात्म्यम् ।

---

# द्वात्रिंशमाहात्म्यम्

अथ भारत-भू-प्रशंसा निरूप्यते ।

पञ्चमस्कन्धे ऊनविंशे शुकोक्तिः । यतः स्वर्गं केवलं दुःखमात्रं अतो भारतभूमिं प्रशंसयन्ते तदेव गायन्तीति ।

अहो वतैषां किमकारि शोभनं
प्रसन्न एषां स्विदुत स्वयं हरिः ।
यैर्जन्म लब्धं नृषु भारताजिरे
मुकुन्दसेवौपयिकं स्पृहा हि नः ॥१

भाः ५।१९।२२

भारते अजिरे भारतोद्याने(२), नोऽस्माकं केवलं स्पृहैव यत्र तन्मुकुन्दसेवोपयोगि नृषु जन्म यैर्लब्धं तैः किं पुण्यमकारि कृतं स्वित् वितर्के, उत अथवा स्वयमेव साधनं विनैव हरिरेषां प्रसन्नोऽभूत् । एवम्भूतस्य पुण्यगणस्य दुष्करत्वात् स्पृहामेवाह ।

किं दुष्करैर्नः क्रतुभिः तपोव्रतैः
दानादिभिर्वा द्युजयेण फल्गुना ।
न यत्र नारायणपादपङ्कज-
स्मृतिः प्रमुष्टातिशयेन्द्रियोत्सवात् ॥२

भाः ५।१९।२३

दुष्करैः क्रतुकर्म्मादिभिः नः फल्गुना तुच्छेन द्युजयेन स्वर्गप्राप्त्या किं न किञ्चित् फलम् । कुतः, यत्र नारायणपादपङ्कजस्मृतिर्नास्ति, प्रत्युत अतिशयिता-दिन्द्रियानामुत्सवात् भोगात् प्रमुष्टा अभूत् । †

† स्वामिटीकैवानुसृता । (१) 'तावत स मोदते' इति मुद्रितभागवते पाठः । (२) भारताङ्गने इति मुद्रितस्वामिटीका ।

किञ्च—

कल्पायुषां स्थानजयात् पुनर्भवात्
क्षणायुषां भारतभूजयो वरः।
क्षणेन मर्त्येन कृतं मनस्विनः
संन्यस्य संयान्त्यभयं पदं हरेः ॥३

भाः ५।१६।२४

आकल्पायुषां, ब्रह्मायुषां क्षणमल्पमेवायुर्य्येषां, वरत्वे हेतुः, मर्त्येनापि देहेन क्षणेनैव कालेन कृतं कर्म्म संन्यस्य हरेः पदं सम्यक् यान्ति। †

किञ्च—

यद्यत्र नः स्वर्गसुखावशेषितं
स्विष्टस्य सूक्तस्य कृतस्य शोभनम्।
तेनाजनाभेः स्मृतिमज्जन्म नः स्यात्
वर्षेहरिर्यद्भजतां शन्तनोति ॥४

भाः ५।१६।२८

स्विष्टस्य सम्यक् यजनस्य, सूक्तस्य प्रवचनस्य कृतस्य अन्यस्यापि कर्म्मणः स्वर्गसुखादुपभुक्तादुवशेषितं यदि किञ्चिदस्ति तेन अजनाभे भारतवर्षे नोऽस्माकं जन्म स्यात्। कीदृशं? स्मृतिमत् हरिरेव सेव्य इत्यनुसन्धानयुक्तम् यतो हरिभजतां शं सुखं तनोति। †

विष्णुपुराणे द्वितीयांशे तृतीयाध्याये मैत्रेयं प्रति पराशरवाक्यम्।

अत्रापि भारतं श्रेष्ठं जम्बुद्वीपे महामुने।
यतो हि कर्म्मभूरेषा ह्यतोऽन्या भोगभूमयः ॥५

विः पुः २।३।२२

तथा देवानां वाक्यम्

गायन्ति देवाः किल गीतकानि
धन्यास्तु ते भारतभूमिभागे।
स्वर्गापवर्गास्पदहेतुभूते
भवन्ति भूयः पुरुषाः सुरत्वात् ॥६

विः पुः २।३।२४

जानीम नैतत् क्व वयं विलीने
स्वर्गप्रदे कर्म्मणि देहबन्धम्।
प्राप्स्यामो धन्याः खलु ते मनुष्याः
ये भारते नेन्द्रियविप्रहीनाः ॥७

विः पुः २।३।२६

स्वर्गप्रदे कर्म्मणि भोगेन विलीने क्षये सति कुत्र देहसम्बन्धं जन्म प्राप्स्याम नैतत् जानीमः। †

अत्र जन्मसहस्राणां सहस्रैरपि सत्तम।
कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसञ्चयात् ॥८

विः पुः २।३।२३

अपुनर्ज्जन्मनि जन्म लभते भारते नरः।
तत् यत् करोति विफलं स शोच्यः सर्व्वजन्मसु ॥९

भारते जन्म लब्ध्वा तदेकशरणतया कृष्णं भजन्ति ते अतिसुखेन संसारं निस्तरन्तीति निर्णीतम्।

इति भक्तिरत्नाकरे द्वात्रिंशन्माहात्म्यम्।

---

† स्वामिटीकैवानुसृता।

# त्रयस्त्रिंशन्माहात्म्यम्

इदानीं प्रायश्चित्तनिन्दामाह ।

षष्ठस्कन्धे प्रथमे शुकवाक्यम् । भक्तेरन्यनिरपेक्षत्वमुक्तं कृच्छ्रादीनि तु भक्तिं विना न शोधयन्तीत्याह ।

प्रायश्चित्तानि चीर्णानि नारायण पराङ्मुखम् ।
न निष्पुनन्ति राजेन्द्र सुराभाण्डमिवापगाः(१) ॥१

भाः ६।१।१६

महतामप्यशोधकत्वे दृष्टान्तमाह—सुराभाण्डमापगा इवेति ।

दृष्ट-श्रुताभ्यां यत्पापं जानन्नप्यात्मनोऽहितम् ।
करोति भूयो विवशः प्रायश्चित्तमथो कथम् ॥२

भाः ६।१।६

दृष्टं राजदण्डादि, श्रुतं नरकपातादि, ताभ्यामात्मनः पापमहितं जानन्नपि भूयः प्रायश्चित्तानन्तरं करोति। अथो अतः कारणात् द्वादशाब्दिकादि कथं प्रायश्चित्तं तेन स मूलदोषस्यानिवृत्ते, निवृत्तौ च पुनः पापप्ररोहायोगात् इति भावः ।

किञ्च—
क्वचिन्निवर्त्ततेऽभद्रात् क्वचित् चरति तत् पुनः ।
प्रायश्चित्तमथोऽपार्थं मन्ये कुञ्जरशौचवत् ॥३

भाः ६।१।१०

क्वचित् कदाचित्, अभद्रात् पापात्, निवर्त्तते, नरक पुनराचरति, यथा कुञ्जरः स्नातोऽपि धूलिनीकरोति, तथा पापस्य दुर्निवारत्वेन ...त्वात् प्रायश्चित्तं व्यर्थमिति । †

कर्म्मणा कर्म्मनिर्हारो नह्यात्यन्तिक इष्यते ।
अविद्वदधिकारित्वात् प्रायश्चित्तं विमर्शणम् ॥४

भाः ६।१।११

कर्म्मणा कृच्छ्रादि प्रायश्चित्तेन कर्म्मणः पापस्य निर्हारः नाशः आत्यन्तिकः सभूलो न हि इष्यतेः अविद्वदधिकारित्वात् अविद्वानधिकारी यस्मिन् तस्य भावस्तत्वं तस्मादतोऽविद्यानाशाभावात् नष्टेऽपि तस्मिन् पापे तत्संस्कारेण पापान्तरस्य पुनः पुनः प्ररोहो भवत्येव । किं तर्हि मुख्यं प्रायश्चित्तं विमर्शनमीश्वरज्ञानम् । †

गुरूणाञ्च लघूनाञ्च गुरूनि च लघूनि च ।
प्रायश्चित्तानि पापानां ज्ञात्वोक्तानि महर्षिभिः ॥५ *

भाः ६।२।१६

तैस्तान्यघानि पूयन्ते तपोदान व्रतादिभिः ।
नाधर्म्मजं तद्हृदयं तदपीशाङ्घ्रि सेवया ॥६ *

भाः ६।२।१७

न निष्कृतै रुद्रितैर्ब्रह्मवादिभिः
तथा विशुद्ध्यत्यघवान् व्रतादिभिः ।
यथा हरेर्नामपदैरुदाहृतैः
तदुत्तमश्लोकगुणोपलम्भकम् ॥७ *

भाः ६।२।११

इत्यादि वचनानुसारेण कृष्णैकशरणतया स्तुत्यैव सर्व्वपापोन्मूलकप्रायश्चित्तम्भवति मोक्षश्च, भक्तिं विना अन्यत्प्रायश्चित्तञ्च न पुनातीति निर्णीतम् ।

इति भक्तिरत्नाकरे त्रयस्त्रिंशन्माहात्म्यम् ।

(१) ...पठ्यते पाठः । † स्वामिटीकैवानुसृता । * भक्तिरत्नावल्याम् ५।२२+५।२४+५।१७

# चतुस्त्रिंशन्माहात्म्यम्

इदानीं ब्रह्मलोकपर्य्यन्तमनित्यं पश्यन् सन् ईश्वरज्ञान-भक्तियुक्तवैराग्यमाह ।

एकादशे ऊनविंशे उद्धवं प्रति भगवद्वाक्यम् ईश्वरज्ञानयुक्तवैराग्यमाह ।

श्रुतिः प्रत्यक्षमैतिह्यमनुमानञ्चतुष्टयम् ।
प्रमाणस्यानवस्थानात् विकल्पात् स विरज्यते ॥१

भाः ११।१९।१७

श्रुतिर्नेहनानास्ति किञ्चनेत्यादि, प्रत्यक्षं पटादि-कार्य्यं तन्त्वादिव्यतिरेकेन न दृश्यते, एवं चैतन्य-व्यतिरेकेन च न किञ्चिद् दृश्यत इति। ऐतिह्यं महाजनप्रसिद्धिः, अनुमानं विमतं विश्वं मिथ्या दृश्यत्वात् शुक्तिरजतादिवत् इत्यादि एवं प्रमाणचतुष्टयम्। एतेष्वनवस्थानात् एतैर्व्वाधितत्वात् स एवं सर्व्वानुगतं सत्यमात्मतत्त्वं पश्यन् विकल्पस्य च मिथ्यात्वात् ततो विरज्यते विरतो भवतीत्यर्थः। न च वेदोक्तस्वर्गादिसुखाशया न विरज्येत इत्याह— कर्म्मणामिति ।

कर्म्मणां परिणामित्वादाविरिञ्च्यादमङ्गलम् ।
विपश्चिन्नश्वरं पश्येददृष्टमपि दृष्टवत् ॥२

भाः ११।१९।१८

आविरिञ्च्यात् ब्रह्मलोकपर्य्यन्तं अदृष्टमपि सुखं अमङ्गलं दुःखरूपं नश्वरञ्च पश्येत् । †

तथा तृतीये प्रबुद्धवाक्यम् ।

कर्म्मण्यारभमाणानां दुःखहत्यै सुखाय च ।
पश्येत् पाकविपर्य्यासं मिथुनीचारिणां नृणाम् ॥३

भाः ११।३।१९

दुःखहत्यै दुःखप्रतिबन्धाय, पाकविपर्य्यासं फलवै-परीत्यं मिथुनीचारिणां मिथुनीभूय वर्त्तमानानाम् । †

कर्म्मभिः साधिता अपि विषयादयो न सुखहेतव इति पश्येदित्याह । †

नित्यार्त्तिदेन वित्तेन दुर्लभेनात्ममृत्युना ।
गृहापत्याप्तपशुभिः का प्रीतिः साधितैश्चलैः ॥४

भाः ११।३।२०

आत्मनः स्वस्य मृत्युरूपेन चलैरनित्यैः अपायिभिश्च ।

जनयन्त्यर्ज्जने दुःखं तापयन्ति विपत्तिषु ।
मोहयन्ति च सम्पत्तौ कथमर्थाः सुखावहाः ॥५

एकादशे दशमाध्याये ब्रह्मणोऽपि सुखं नास्ति किमन्येषामित्याह ।

लोकानां लोकपालानां मद्भयं कल्पवासिनाम् ।
ब्रह्मणोऽपि भयं मत्तो द्विपरार्द्धपरायुषः ॥६

भाः ११।१०।३०

द्वौ परार्द्धौ परमायुर्यस्य तस्य ब्रह्मणोऽपि भयं भवेत् अतो लोको विरज्येत ।

तृतीयस्कन्धे वैराग्यमेवाह ।

एवं विधैरहोरात्रैः कालगत्योपलक्षितैः ।
अपक्षीणमिवास्यापि परमायुर्वयःशतम् ॥७

भाः ३।११।३३

परमायुर्वर्षःशतं ब्रह्मणोऽपि आयुः अपक्षीणं गतप्रायः ।

दशमे शुकवाक्यम् ।

वैराग्यमाद्यं यतमानसंज्ञं
क्वचिद्विरागो व्यतिरेकसंज्ञम् ।
एकेन्द्रियाख्यं हृदि रागमोक्षम्
तस्यात्मभावस्तु वशीकृताख्यम् (१) ॥८

भाः १०।८६।१५ श्लोकटीकायां श्रीधर-
स्वामिधृतः श्लोकः ।

यतमानं विषयभोगत्यागे इच्छा, व्यतिरेकं क्वचिद्भवनादिव्यतिरेकेन वृत्तिः भोजनं एकेन्द्रियं मनसि शैथिल्यं वहिरिन्द्रियैरेव सेवनं, आत्मभावो वाह्याभ्यन्तरैरेव विषयपरित्यागः, एवं चतुर्विधं वैराग्यं क्रमेण भवति ।

शान्ति शतके ।

इन्द्रस्याशुचिशूकरस्य च सुखे दुःखे च नास्त्यन्तरं
स्वेच्छाचारतया तयोः खलुसुधा विष्ठा च काम्याशनम् ।
रम्भा चाशुचि शूकरी च परमप्रेमास्पदं मृत्युतः
सन्त्रासोऽपिसमः स्वकर्म्मगतिभिश्चान्योन्यभावः समः ॥९

शान्तिशतके—३७

जन्मेदं व्यर्थतां नीतं भव-भोगोपलिप्सया ।
काचमूल्येन विक्रीतो हन्त चिन्तामणिर्म्मया ॥१०

शाः शः १२

प्रबोधे—

सदालोलालोलाविषयजरसा प्रान्तविरसाः
विपद्देहं गेहं महदपि धनं भूरिनिधनम् ।
परः शोको लोकः सततमबलानर्थबहुला
तथाप्यस्मिन् घोरे(२) पथि वत रता नात्मनिरताः ॥११

प्रबोधचन्द्रोदयनाटके ५ अङ्के ।

इत्यादि वचनानुसारेण कृष्णैकशरणतया वैराग्यं विना केवलया भगवद्भक्त्यैवगतिर्लभ्यते, ये तु विषयविरक्ता भजन्ति तेषां पुनः किं वक्तव्यमिति निर्णीतम् ।

इति भक्तिरत्नाकरे चतुस्त्रिंशन्माहात्म्यम् ।

---

## पञ्चत्रिंशन्माहात्म्यम्

अथ मायातरणोपायमाह—

प्रथमतो मायां प्रपञ्चयति ।

चतुर्थस्कन्धे पुरञ्जनोपाख्याणे प्राचीनवर्हिषं प्रति नारदवाक्यम् दैववशेन सुखदुःखमाप्नोतीति सदृष्टान्तमाह । +

क्षुत्परीतो यथा दीनः सारमेयो गृहं गृहम् ।
अटन् विन्दति(३) यद्दिष्टं दण्डमोदनमेव वा ॥१

भाः ४।२९।२७

तथा कामाशयो जीव उच्चावचपथा भ्रमन् ।
उपर्य्यधो वा मध्ये वा याति दिष्टं प्रियाप्रियम् ॥२

भाः ४।२९।२८

क्षुधापरिव्याप्तः सारमेयः श्वा दण्डं दण्डेन ताडनम् । ननु तर्हि सुखस्य सम्भवात् दुःखस्य च प्रतीकार सम्भवात् नैकान्ततो हेयत्वमित्याह । †

(१) तस्यात्मभावस्तु वशीकृताख्यः इति (क) पुस्तके पाठः । तस्याप्यमभावस्तु इति मुद्रितस्वामिटीकायां पाठः । (२) तथाप्युच्चैर्घोरैः इति (क) पुस्तके पाठः । (३) चरन् विन्देत इति [illegible]भागवते पाठः । + [illegible]स्वामिटीकानुसृता ।

दुःखेष्वेकतरेणापि दैवभूतात्महेतुषु ।
जीवस्य न व्यवच्छेदः स्यात् चेत्तत्तत् प्रतिक्रिया ॥३

भाः ४।२६।२९

दुःखस्य तावत् प्रतिकारः नास्ति, स्यात् चेत् तस्य प्रतिक्रिया तथापि त्रिविधेषु मध्ये एकतरेणापि दुःखेन व्यवच्छेदो वियोगो नास्ति। प्रतिक्रियाणामपि दुःखरूपत्वात् इति। सदृष्टान्तमाह।

यथा हि पुरुषो भारं शिरसा गुरुमुद्वहन्।
तं स्कन्धेन समाधत्ते तथा सर्व्वाः प्रतिक्रियाः ॥४

भाः ४।२६।३०

तदेवं संसृतिकारणमुक्त्वा निवृत्तिप्रकारमाह।

अथात्मनोऽर्थभूतस्य यतोऽनर्थपरम्परा।
संसृतिस्तद्व्यवच्छेदो भक्त्या परमया गुरौ ॥५

भाः ४।२६।३३

अथ तस्मात् पुरुषार्थभूतस्यात्मनः यतोऽज्ञानात् मनसोऽनर्थपरम्परया संसृतिर्भवति तस्या व्यवच्छेदो गुरुरूपे वासुदेवे भक्त्यैव। †

ननु संसृतिनिवृत्तिः वैराग्यपूर्व्वकज्ञानादेव त तु भक्त्या भवति तत्राह।

वासुदेवे भगवति भक्तियोगः समाहितः।
सध्रीचीनेन वैराग्यं ज्ञानञ्च जनयिष्यति ॥६

भाः ४।२६।३४

सध्रीचीनेन समीचीनेन, कारणेन(१)।

नन्वसौ महाफलो भक्तियोगः कथं स्यादत आह—†

सोऽचिरादेव राजर्षे स्यादच्युतकथाश्रयः।
शृण्वतः श्रद्दधानस्य नित्यदा स्यादधीयतः ॥७

भाः ४।२६।३५

अच्युतस्य कथामाश्रित्य वर्त्तमानो ह्यचिरात् स्यात्। कस्य स्यादत्राह— शृण्वतो अधीयानस्य, कुत्र स्यादत आह—†

यत्र भागवता राजन् साधवो विशदाशयाः।
भगवद्गुणानुकथने श्रवणे व्यग्रचेतसः ॥८

भाः ४।२६।३६

भगवद् गुणानुकथने श्रवणे च व्यग्रं सत्वरं चेतो येषां ते। ननु साधुसङ्गं विना स्वयमेव हरिकथाचिन्तनादिना भक्तिर्भवेदेव इत्याशङ्क्याह द्वाभ्याम्।

तस्मिन् महन्मुखरिता मधुभिच्चरित्र-
पीयूषमेव सरितः परितः स्रवन्ति।
ता ये पिबन्त्यवितृषो नृप गाढकर्णैः
तान्न स्पृशन्त्यशनतृड् भय-शोक-मोहाः ॥९ *

भाः ४।२६।३७

तस्मिन् स्थाने महद्भिः मुखरिताः मधुभिच्चरित्रमेव पीयूषं तदेव शिष्यत इति शेषो यासु तासां सरितः शुद्धामृतवाहिन्य इत्यर्थः।

एतैरुपद्रुतो नित्यं जीवलोकः स्वभावजैः।
न करोति हरेर्नूनं कथामृतनिधौ रतिम् ॥१० *

भाः ४।२६।३८

सत्सङ्गमन्तरेण स्वयमेव चिन्तनाद्याभासस्य [illegible] रसावेशाभावाच्च। क्षुत्पीपासाद्यभिभूतस्य भक्तिर्न [illegible]ति भावः। †

भगवदनुग्रहमन्तरेण न कस्यापि [illegible] कैमुतिकन्यायेनाह चतुर्भिः।

---

† स्वामिपादीयटीका। * भक्तिरसामृतसिन्धु ४।२४-४।२५ (१) प्रकारेण इति [illegible]टीका।

प्रजापतिपतिः साक्षात् भगवान् गिरिशो मनुः ।
दक्षादयः प्रजाध्यक्षाः नैष्ठिकाः सनकादयः ॥११

भाः ४।२६।३६

मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।
भृगुर्वशिष्ठ इत्येते मदन्ता ब्रह्मवादिनः ॥
अद्यापि वाचस्पतयस्तपो विद्या समाधिभिः ।
पश्यन्तोऽपि न पश्यन्ति पश्यन्तं परमेश्वरम् ॥१२

भाः ४।२६।४०-४१

प्रजापतिपतिर्ब्रह्मा मदन्ताः अहं नारदोऽन्तः येषां ते वाचस्पतयोऽपि तपोविद्यासमाधिभिः उपायैः पश्यन्तो विचिन्वन्तोऽपि पश्यन्तं सर्व्वसाक्षिणं न पश्यन्ति। कुत इत्यत आह—

शब्द ब्रह्मणि दुष्पारे चरन्त उरुविस्तरे ।
मन्त्रलिङ्गैर्व्यवच्छिन्नं भजन्तो न विदुः परम् ॥१३

भाः ४।२६।४२

शब्दब्रह्मणि वेदे, उरु विस्तारो यस्य। अर्थतो पारशून्ये तस्मिन् वर्त्तमानाः मन्त्राणां लिङ्गैः वज्रहस्तत्वादिगुणयुक्तविविधदेवताभिधानसामर्थ्यैः परिच्छिन्नमेवेन्द्रादिरूपं तत्तत्कर्म्मानुग्रहेण भजन्तः परमेश्वरं न विदुः। †

तर्हि को नाम अन्यः कर्म्माद्याग्रहं हित्वा परमेश्वरमेव भजेदत आह—

यदा यस्यानुगृह्णाति भगवानात्मभावितः ।
स जहाति मतिं लोके वेदे च परिनिष्ठिताम् ॥१४ *

भाः ४।२६।४३

यदा यमनुगृह्णाति, अनुग्रहे हेतुः आत्मनि भावितः सन् स तदा लोके लोकव्यवहारे वेदे च कर्म्ममार्गे परिनिष्ठितां मतिं त्यजति। †

पुराणान्तरे—

ब्रह्मादितृणपर्य्यन्तं भूतग्रामं चतुर्व्विधम् ।
चराचरमिदं विश्वं प्रसुप्तं यस्य मायया ॥१५

तस्य विष्णोः प्रसादेन यदि कश्चित् प्रबुद्ध्यति ।
स निस्तरति संसारं देवानामपि दुस्तरम् ॥१६

द्वितीयस्कन्धे सप्तमाध्याये ब्रह्मणो वाक्यम् ।
यदि केऽपि न विदन्ति, तर्हि कथं मुच्येरन्? तत्कृपया एवेत्याह—

येषां स एव भगवान् दययेदनन्तः
सर्व्वात्मना श्रितपदो यदि निर्व्यलीकम् ।
ते दुस्तरामतितरन्ति च देवमायां
नैषा ममाहमिति धीः श्व-शृगालभक्ष्ये ॥१७

भाः २।७।४२

दययेत् दयां कुर्य्यात् तदा यद्यकपटाश्रितचरणाः भवन्ति ते दुस्तरां देवमायामतितरन्ति, चकारात् मायावैभवं विदन्ति च। अथेति वा पाठः। प्रत्यक्षमेव तेषां मायातितरणमाह नैषामिति। श्वशृगालानां भक्ष्ये देहे। किं बहुना सत्सङ्गेन सर्व्वे विदन्तीत्याह।

ते वै विदन्त्यतितरन्ति च देवमायां
स्त्री-शूद्र-हून-शवरा अपि पापजीवाः ।
यद्यद्भुतक्रमपरायण शीलशिक्षाः
तिर्य्यग्जना अपि किमु श्रुतधारणा ये ॥१८

भाः २।७।४६

अद्भुताः क्रमाः पादन्यासाः यस्य हरेः तत्परायणाः तद्भक्ताः तेषां शीले शिक्षा येषां ते तथा यदि भवन्ति तर्हि तेऽपि विन्दन्तीत्यर्थः। श्रुते भगवतो

* भक्तिरत्नावल्याम् ११८ † स्वामिटीकैवानुसृता।

रूपे धारणा मनोनियमनं येषां ते विन्दन्तीति किमु वक्तव्यम्। †

सप्तमस्कन्धे प्रह्लादवाक्यम्। ननु तद्दास्ये सति कथं प्राक्तनानां दुःखानां परिहारः स्यात् तत्राह—

सोऽहं प्रियस्य सुहृदः परदेवतायाः
लीलाकथास्तव नृसिंह! विरिञ्चिगीताः।
अञ्जस्तितर्म्यनुगृणन् गुणविप्रमुक्तो
दुर्गाणि ते पदयुगालयहंससङ्गः॥१६ *

भाः ७।९।१८

आत्मतत्त्वात् उपकारमनपेक्ष्य हितकर्त्तुः विरिञ्चि-गीताः तत् सम्प्रदायेन प्रवर्त्तिताः अञ्जसा सुखेन दुर्गाणि दुःखानि तितर्म्मि न गणयिष्यामि, कथं? तव पदयुगमेव आलयो येषां भक्तानां त एव हंसास्तैः सङ्गः सन् गुणविप्रमुक्तः रागादिभिर्विशेषेण मुक्तः सन्। अयंभावः—तद्दास्ये सति भगवदनुग्रहेण मत्सङ्गः स्यादेव, ततो विगतरागतया भगवतो गुणवर्णनं तेन सर्व्वदुःखासम्भवः स्यात् इति वाक्यार्थः।

तृतीयस्कन्धे मैत्रेयवाक्यम्।

यथामतिकीर्त्तनेन यथामतिश्रवणेनावश्यक-कैवल्यमित्याह—

एकान्तलाभं वचसोनुपुंसां
सुश्लोकमौलेर्गुणवादमाहुः
श्रुतेश्च विद्वद्भिरुपाकृतायां
कथासुधायामुपसंप्रयोगम्॥२० *

भाः ३।६।३३

उपसंप्रयोगं सन्निधावर्पणम्।

एकादशे विंशत्यध्याये भगवद्वाक्यम्। भक्त्य-धिकारिणो भक्तियोगमाह नवभिः(१)।

जातश्रद्धो मत्कथासु निर्व्विण्णः सर्व्वकर्म्मसु।
वेद दुःखात्मकान् कामान् परित्यागेऽप्यनीश्वरः॥२१

भाः ११।२०।२७

मत्कथासु जातश्रद्धः अतएव अन्येषु कर्म्मसु निर्व्विण्णः उद्विग्नः न तु तत्फलेषु विरक्तः। तदाह—वेदेति। यद्यपि वेद तथापि तत्परित्यागे अनी-श्वरोऽशक्तः। †

ततो भजेत मां प्रीत्या श्रद्धावान् दृढनिश्चयः।
जुषमाणश्च तान् कामान् दुःखोदर्कांश्च गर्हयन्॥२२

भाः ११।२०।२८

एवंभूतो यः सः श्रद्धासुभक्त्यैव सर्व्वं भविष्यतीति दृढनिश्चयः सन् ततस्तदनन्तरं मां प्रीत्या भजेत विषयान् सेवमानोऽपि तेषु प्रीतिं न कुर्य्यादित्याह —गर्हयन्निति। †

कथं भजेत किं वा ततो भवति? तदाह—द्वाभ्याम्।

प्रोक्तेन भक्तियोगेन भजतो मा सकृन्मुने।
कामाः हृदय्या नश्यन्ति सर्व्वे मयि हृदि स्थिते॥२३

भाः ११।२०।२९

श्रद्धामृतकथायां मे शश्वत् मदनुकीर्त्तनमित्यादिना तत्र तत्रोक्तेन मा मां असकृत् नित्यं भजतो हृदय्याः हृद्गताः कामा नश्यन्ति। †

---

† स्वामिटीकैवानुसृता। * भक्तिरत्नावल्याम् ५।४०+३।३१। (१) "भक्त्यधिकारिणो भक्तियोगमाह एकादशे विंशत्यध्याये भगवद्वाक्यम् नवभि" इति आदर्शे पाठः।

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्व्वसंशयाः ।
क्षीयन्ते चास्य कर्म्माणि मयि दृष्टेऽखिलात्मनि(१) ॥२४

भाः ११।२०।३०

हृदयमेव ग्रन्थिः अहङ्कारः तत्पूर्व्वकाश्च सर्व्वे संशयाः असम्भावनादयः, कर्म्माणि(२) अनारब्ध फलानि संसारहेतुभूतानि च। तदेवं व्यवस्थयाधिकारत्रयमुक्तम्; तत्र च भक्तेरन्यनिरपेक्षत्वात् अन्यस्य च तत्सापेक्षत्वात भक्तियोग एव श्रेष्ठ इत्युपसंहरति त्रिभिः। †

तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः ।
न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह ॥२५

भाः ११।२०।३१

मदात्मनः मयि आत्मा चित्तं यस्य तस्य श्रेयः श्रेयः साधनम्। तत्र हेतुः—यत् कर्म्मभिरित्यादि।

यत् कर्म्मभिर्यत् तपसा ज्ञानवैराग्यतश्च यत् ।
योगेन दानधर्म्मेण श्रेयोभिरितरैरपि ॥२६
सर्व्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा ।
स्वर्गापवर्गं मद्धाम कथञ्चिद्यदि वाञ्छति ॥२७

भाः ११।२०।३२-३३

इतरैस्तीर्थयात्राव्रतादिभिः श्रेयः साधनैर्यद्भाव्यं सत्त्वशुद्ध्यादि तत्सर्व्वमञ्जसा अनायासेनैव स्वर्गमपवर्गं मद्धाम वैकुण्ठं लभत एव, वाञ्छा तु नास्तीत्युक्तं यदि वाञ्छतीति। †

अत्र हेतुमाह—

न किञ्चित् साधवो धीराः भक्ता ह्येकान्तिनो मम ।
वाञ्छन्त्यपि मया दत्तं कैवल्यमपुनर्भवम् ॥२८

भाः ११।२०।३४

धीराः धीमन्तः, यतो मम एकान्तिनः मय्येव प्रीतियुक्ताः अतो मया दत्तमपि न गृह्णन्ति किं पुनर्वक्तव्यं न वाञ्छन्तीत्यर्थः। अपुनर्भवं आत्यन्तिकमपि कैवल्यम्।

नैरपेक्ष्यं परं प्राहुर्निःश्रेयसमनल्पकम् ।
तस्मान्निराशिषो भक्तिर्निरपेक्षस्य मे भवेत् ॥२९

भाः ११।२०।३५

नैरपेक्ष्यमेव परमुत्कृष्टं, अनल्पं महत् निःश्रेयसं फलं तत्साधनञ्च प्राहुः, मे भक्तिर्निराशिषः प्रार्थनाशून्यस्य निरपेक्षस्य प्रार्थनाकारणभूतापेक्षारहितस्य पुंसो भवेत्। यद्वा मे निरपेक्षस्य या भक्तिः सा निराशिषो भक्तस्य भवेदित्यर्थः। अनेन प्रकारेण सिद्धानां न गुणदोषाविति विरोधपरिहारमुपसंहरति। †

न मय्येकान्तभक्तानां गुणदोषोद्भवा गुणाः ।
साधूनां समचित्तानां बुद्धेः परमुपेयुषाम् ॥३०

भाः ११।२०।३६

गुणदोषैर्व्विहितप्रतिषिद्धैरुद्भवो येषां ते गुणाः पुन्यपापादयः साधूनां निरस्तरागादीनां अतः समचित्तानां, अतएव बुद्धेः प्रकृतेः परं ईश्वरं प्राप्तानाम्। †

एतदेवोपपादयति श्रीभगवान्—

एवमेतान् मयादिष्टाननुतिष्ठन्ति मे पथः ।
क्षेमं विदन्ति मत्स्थानं यद्ब्रह्मपरमं विदुः ॥३१

भाः ११।२०।३७

मेपथः मत् प्राप्त्युपायान् येऽनुतिष्ठन्ति ते क्षेमं कालमायादिरहितं मम लोकं विन्दन्ति यत् परमं ब्रह्म तत्त्व विदुः। †

---

† स्वामिटीकैवानुसृता। (१) 'दृष्ट एवात्मनीश्वरे' इति (ख) पुस्तके पाठान्तरम्। (२) 'न कर्म्माण्यप्यारब्ध फलानि संसारहेतुभूतानि' इति श्रुतिस्वामिटीकायां पाठान्तरं दृश्यते।

इत्यादि वचनानुसारेण तदेकशरणतया भगवद्भक्त्यैव मायाञ्च तरन्ति, सर्व्वस्वार्थानि च भवन्तीति निर्णीतम्।

इति भक्तिरत्नाकरे पञ्चत्रिंशन्माहात्म्यम्।

* * *

---

## षड्त्रिंशन्माहात्म्यम्

अथ श्रीभागवतस्य माहात्म्यं कथ्यते।

प्रथमे स्वामिनोक्तम्।

श्रीमद्भागवताभिधः सुरतरुस्ताराङ्कुरः सज्जनिः
स्कन्धैर्द्वादशभिस्ततः प्रविलसद्भक्त्यालवालोदयः।
द्वात्रिंशत्त्रिशतञ्च यस्य विलसत् शाखा सहस्राण्यलम्
पर्णान्यष्टादशेष्टदोऽति सुलभो वर्व्वर्त्ति सर्व्वोपरि ॥१

भाः १।१।१ स्वामिटीकायाम्।

प्रथमस्कन्धे उपक्रमे श्रीमद्वेदव्यासेनोक्तम्। इदानीं श्रोतृप्रवर्त्तनाय श्रीमद्भागवतस्य काण्डत्रयविषयेभ्यः सर्व्वशास्त्रेभ्यः श्रैष्ठ्यं दर्शयति। †

धर्म्मः प्रोज्झितकैतवोऽत्र परमो निर्म्मत्सराणां सतां
वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम्।
श्रीमद्भागवते महामुनिकृते किं वा परैरीश्वरः
सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात् ॥२

भाः ५।१।२

अत्र श्रीमद्भागवते सुन्दरे परमोधर्म्मो निरूप्यते। परमत्वे हेतुः, प्रकर्षेण उज्झितं कैतवं फलाभिसन्धिलक्षणं कपटं यस्मिन् सः, प्रशब्देन मोक्षाभिसन्धिरपि निरस्तः, केवलमीश्वराराधनलक्षणो धर्म्मो निरूप्यत इत्यर्थः। अधिकारितोऽपि धर्म्मस्य परमत्वमाह निर्म्मत्सराणां परोत्कर्षासहनं मत्सरः तद्रहितानां सतां भूतानुकम्पिनाम्। एवं कर्म्मकाण्डविषयेभ्यः श्रैष्ठ्यमुक्तं, ज्ञानकाण्डविषयेभ्योऽपि श्रैष्ठ्यमाह वेद्यमिति। वास्तवं परमार्थभूतं वस्तुवेद्यं न तु वैशेषिकानामिव द्रव्यगुणादिरूपं। यद्वा वास्तवशब्देन वस्तुनोऽंशः जीवो वस्तुनः शक्तिर्माया च, वस्तुनः कार्य्यं जगच्च तत्सर्व्वं वस्त्वेव न ततः पृथगिति, वेद्यं अयत्नेनैव ज्ञातुं शक्यमित्यर्थः ततः किमत आह—शिवदं परमसुखदं, किञ्च—आध्यात्मिकादितापत्रयोन्मूलनञ्च अनेन ज्ञानकाण्डविषयेभ्यः श्रैष्ठ्यमुक्तम्। कर्त्तृतोऽपि श्रैष्ठ्यमाह—महामुनिः श्रीनारायणस्तेन संक्षेपेन प्रथमतः कृते देवता काण्डतः श्रैष्ठ्यमाह—परैः शास्त्रैः साधनैर्वाईश्वरो हृदि किम्वा सद्यएवावरुध्यते स्थिरीक्रियते। वा शब्दः कटाक्षे। किन्तु विलम्बेन कथञ्चिदेव, अत्र तु शुश्रूषुभिः श्रोतुमिच्छद्भिरेव तत्क्षणादेवावरुध्यते। ननु इदमेव तर्हि किमिति सर्व्वें न शृण्वन्ति तत्राह कृतिभिरिति श्रवणेच्छा तु पुण्यैर्विना न भवतीति भावः। तस्मादत्र काण्डत्रयार्थस्यापि यथावत् प्रतिपादनात् इदमेव सर्व्वशास्त्रेभ्यः श्रेष्ठं, अतो नित्यमेतदेव श्रोतव्यमित्यर्थः। †

तत्र द्वितीये सूतवाक्यम्। कृपालुतां दर्शयन्नाह।

यः स्वानुभावमखिलश्रुतिसारमेक-
मध्यात्मदीपमतितितीर्षतां तमोऽन्धम्।
संसारिणां करुणयाह पुराणगुह्यं
तं व्याससूनुमुपयामि गुरुं मुनीनाम् ॥३

भाः १।२।३

† स्वामिटीकैवानुसृता। *** (क) पुस्तके ग्रन्थोयऽत्रैव समापितः। रामचरणठाकुरेणापि एतावत् पर्य्यन्त एव ग्रन्थोऽलिखितः परिशिष्टं माहात्म्यत्रयं (ख) पुस्तके योजितमस्तीति सुधीभिरालोचनीयम्।

अन्धं गाढ़ं तमः संसाराख्यं अतितरितुमिच्छतां पुराणानां गुह्यं गोप्यं, अत्र हेतुत्वेन चत्वारि विशेषणानि, स्वः निजः असाधारणः अनुभावः प्रभावो यस्य तत् स्वानुभावं अखिलश्रुतिनां सारं एकमद्वितीयं अनुपममित्यर्थः आत्मानं कार्य्यकारणसंघातमधिकृत्य वर्त्तमानं आत्मतत्त्वमध्यात्मं तस्य दीपं साक्षात् प्रकाशकम् उपयामि शरणं व्रजामि ।

तत्र सप्तमे सूतवाक्यम् ।

अनर्थोपशमं साक्षात् भक्तियोगमधोऽक्षजे ।
लोकस्याजानतो व्यासश्चक्रे(१) सात्वतसंहिताम् (२) ॥४
भाः १।७।६ †

अनर्थमुपशमयति योऽधोक्षजे साक्षाद्भक्तियोगः तञ्चापश्यत् एतत् सर्व्वं स्वयं दृष्ट्वा एवमजानतो लोकस्यार्थे सात्वतसंहितां श्रीभागवताख्यां चक्रे । †

द्वितीये प्रथमे शुकवाक्यम् । किमिदमपूर्व्वं कथयसि ? सत्यमपूर्व्वमिदमेव इत्याह ।

इदं भागवतं नाम पुराणं ब्रह्मसम्मितम् ।
अधीतवान् द्वापरादौ पितुर्द्वैपायनादहम् ॥५
भाः २।१।८

इदं भगवत्प्रोक्तं तन्नामैकप्रधानं पुराणमपि नवमिति पुराणं, ब्रह्मसम्मितं वेदतुल्यं, यद्वा ब्रह्म सम्यक् मितं येन, कुतः तया प्राप्तमिति चेदत आह— अधीतवानिति । सिद्धस्य तव कुतः अध्ययने प्रवृत्तिस्तत्राह— †

परिनिष्ठितो नैर्गुण्ये उत्तमश्लोकलीलया ।
गृहीतचेता राजर्षे आख्यानं यदधीतवान् ॥६
भाः २।१।७

गृहीतचेताः आकृष्टचेताः मुक्तस्यापि परमरमणीयमिदमिति भावः । †

प्रथमे तृतीये सूतवाक्यम् ।

कृष्णे स्वधामोपगते धर्म्मज्ञानादिभिः सह ।
कलौ नष्टदृशामेषः पुराणार्कोऽधुनोदितः ॥७
भाः १।३।४२

मत्स्यपुराणे पुराणदानप्रस्तावे ।

यत्राधिकृत्य गायत्रीं वर्ण्यते धर्म्मविस्तरः ।
वृत्रासुरवधोपेतं तद्भागवतमुच्यते ॥८
मः पुः ५३।२०

लिखित्वा तच्च यो दद्यात् हेमसिंहसमन्वितम् ।
प्रौष्ठपद्यां पौर्णमास्यां स याति परमं पदम् ॥६
मः पुः ५६।२२

पुराणान्तरे च—

अष्टादश सहस्राणि पुराणं परिकीर्त्तितम् ।
ग्रन्थोऽष्टादशसाहस्रो द्वादशस्कन्धसम्मितः ॥

हयग्रीवब्रह्मविद्या यत्र वृत्रवधस्तथा ।
गायत्र्या च समारम्भस्तद्वै भागवतं विदुः ॥१०

पद्मपुराणे अम्बरीषं प्रति गौतमवाक्यम् ।

अम्बरीष शुक प्रोक्तं नित्यं भागवतं शृणु ।
पठस्व स्वमुखेनापि यदीच्छसि भवक्षयम् ॥११

अतएव तन्नामान्यदपि नाशङ्कनीयम् ।

(१) विद्वान् इति मुद्रितभागवते पाठः । (२) संहिताः इति अन्यत्र पाठः । † स्वामिटीकैषोक्ता ।

